धाभ्रे राधःकौत्से मयोभरे स्तोतृभ्योवारे देवःपुनाभि-
सोमयोमर्घंष्टंभयोस्तावे मत्सरासश्च ॥ ३ ॥

भक्तिमध्यःपादमध्यश्च स्तोभेप्रत्यये संध्यगीतः स-
र्वत्र पदगीतं वक्ष्यामोदेवःप्रत्युक्रांतऐडयास्यद्वितीया-
यां जिगत्नवस्तेपूतायां वाङ्निधनेक्रौञ्चे जारःप्रस्तुन्यानद्वि-

ध्यगीतः *मयोभरे* सौभरे उग्रश्चक्रामयोघृपद्विति प्रतिहारमध्ये संध्यगीतः *स्तोतृभ्योवारे* वारवन्तीये स्तोतृभ्योधृष्णुधीयान-इति प्रतिहारमध्ये संध्यगीतः । *देवः पुनाभिमोमयोर्मेधष्टम्भयोः स्तावे* उत्सोदेवोराजा देव इति च मैधातिथवैष्टंभयोः प्रस्तावमध्यसन्ध्यगीतौ । *मत्सरासश्च* मत्सरास इति च प्र-स्तावमध्ये पादमध्ये च मैधातिथमहावैष्टंभयोः संध्यगीतौ । (मध्यः पादमध्य इति सर्वोदाहरणेषु अधिकारो द्रष्टव्यः) ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
तृतीया कण्डिका समाप्ता ॥

*भक्तिमध्यः पादमध्यश्चास्तोभे प्रत्यये सन्ध्यगीतः सर्वत्र* भक्तिमध्यः पादमध्यश्च अस्तोभे प्रत्ययेः अः कारोद्वद्‌ः संध्य-गीतः सर्वत्र भवति एष उत्सर्गः उदाहरणानि दुहानयोघाजप-द्वैगतयोः पौरुहन्मनगौङ्गवयोः प्रस्तावमध्ये पादमध्ये च संध्यगीतः एवमादीनि *पदगीतं वक्ष्यामः* पूर्वलक्षणेन सन्ध्यगीतमाप्तस्ताना-मपवादः *देवः प्रत्युत्क्रान्त ऐडयास्य द्वितीयायां *ऐडयास्ये उत्सोदेव इति उद्गीथपादमध्ये पदगीतः *जिगत्नवस्ते पूतायां वाङ्निधने क्रौञ्चे* वाङ्निधने क्रौञ्चे ते पूतायां जिगत्नव इति उप-द्रवमध्ये पदगीतः *जारः प्रस्तुन्यानाद्वितीयायां विते* गौरीविते-

तीयायांचिते हीपीस्वरतत्सास्त्रिणिधनायास्ये घृतव्र-
तश्लैशोके भरन्तःसौभरलेययोः पुरोजिनरइत्येतौ श-
ब्दौ मराये शुचयइमाउत्वायाऽंइयैते स्वःकार्त्तयशौ-
दलस्यवेषु श्येनःसंमिश्लायाऽंसऽंहिते जातौवाचः
साम्नित्रियंदेवायां दधन्वांयःसर्वत्र दक्षशूरावर्के-
शार्ङ्गेच प्रत्नयुजोभारद्वाजे पुरांदर्मआमंद्रैरित्यत्राभि-

---

भ्रमुन्वाद्वितीयायां मरुत्वार इति उद्गीथमध्ये पद्गीतः । *हीपीस्व-
रतत्सर्गीस्त्रिणिधनायास्ये* त्रिणिधनायास्ये द्वितीयायां उत्सोदेवो
हीपी स्वरस्य उद्गीथमध्ये पद्गीतः *घृतव्रतश्लैशोके* श्लैशोको-
त्तमायां घृतव्रत इति उपद्रवमध्ये पद्गीतः *भरन्तः सौभरलेय-
योः* स्तूहंतकाचिद्भरंतइति सौभरकालेययोः उद्गीथमध्ये पद्-
गीतः *पुरोजिनरइत्येतौ शब्दौ मराये* मराये पुरोजिती-
घा । अग्निर इति च प्रस्तावमध्ये पद्गीतौ *शुचयइमा-
उत्वायाऽइयैते* पावकवर्णाः शुचयइतिइयैतेउद्गीथमध्येपद्गी-
तः । *स्वःकार्त्तयशौदलस्यवेषु* इंदुरस्वः कार्त्तयशे द्वि-
तीयायां उद्गीथमध्ये पद्गीतः अद्ले उपद्रवमध्ये पद्गीतः श्रा-
सदस्यवित्द्वितीयायामुपद्रवमध्ये तृतीयायां च प्रस्तावमध्ये प-
द्गीतः *श्येनः संमिश्लायांसऽंहिते* स॒ऽहिते च सीदच्छयेन-
इति उपद्रवमध्ये पद्गीतः *जातौ वाचः साम्नि त्रियंदे-
वायां* वाचः साम्नि ऋतेन यज्ञजात इति उद्गीथमध्ये प-
द्गीतः *दधन्वांयः सर्वत्र* दधन्वायो य इति सर्वत्र छ-
न्दः सर्वत्र पद्गीतः *दक्षशूरावार्के* दीर्घंतमसोर्के दक्षोदेवानां-
शूरोनवत्स इति च प्रस्तावमध्ये पद्गीतौ *शार्ङ्गे च* एता-
वेव शब्दौ प्रस्तावमध्ये पद्गीतौ *प्रत्नयुजोभारद्वाजे* प्र-

निधनेकाण्वे मर्त्तोंयोयꣳसहोतायां कमश्वेऽश्वायंतो- भित्वाशूरायांकण्वतरेऽस्येदिंद्रश्वाभित्वापूर्व्यायꣳ सु- ष्टुतयोवपद्गायांबृहति रुपंउंघस्यपृतङ्त्यत्र वाजीये दिव्योरथंतरबृहति राघस्तमोर्वीके विघतोभद्राइंद्रा- याꣳसौभरे भरमाणोभ्याभिह्वियौधे मृजानःसवाज्य- क्षायांयोधीये योधीये ॥ ४ ॥

---

ह्युजोहरय इति भारद्वाजे उद्गीथमध्ये पदगीतः *पुरांदर्मआ- मंद्रेरित्यत्राभिनिधनेकाण्वे* पुरांदर्मोअपामजइति उद्गीथमध्ये अभिनिधने काण्वे पदगीतः *मर्तोयोयश्सहोतायां कमश्वे* साकमश्वे अधश्सहोतायां मर्तोयोअस्मा इति उद्गीथमध्ये पदगीतः *अश्वायन्तोभित्वाशूरायाकण्वतरे* कण्वरथन्तरे क्षौ- द्रे अभित्वाशूर इति तृतीयायां अश्वायन्त इति उद्गीथमध्ये पदगीतः *अस्येदिन्द्रश्वाभित्वापूर्व्यायाम्* यशब्दात् कण्व- रथन्तर एवाभित्वापूर्वेद्वितीयायां अस्येदिन्द्रे इति उद्गीथमध्ये पदगीतः । *सुष्टुतयोवपद्गायां बृहति* बृहतिरर्द्धस्तुत्वा सुष्टुत- य इति उद्गीथमध्ये पदगीतः । *रुपन्त्रघस्यतङ्सत्र वाजीये *रा- योवाजीये आछायामरुप इति उद्गीथमध्ये पदगीतः । *दिव्यो- रथन्तरबृहति* रथन्तरबृहति द्वितीयायां नत्वावां अन्योदिव्य इति उद्गीथमध्ये पदगीतः *राघस्तमोर्वीके* वौंकेराघस्तम इति उद्गी- थमध्ये पदगीतः *विघातोभद्रा इन्द्राया सौभरे* सौभरेभद्रा इन्द्रा- यां यो अस्य कामं विधत्त इति उद्गीथमध्ये पदगीतः *भरमाणो ऽभ्यभिह्वियौ ये *यौधाजये अभ्याभिह्वित्रसायां शर्याभिर्नभरमाण इति उपद्रवमध्ये पदगीतः *मृजानः सत्राज्यक्षायां योधीयेयोधीये* जरामध्येसत्राज्यक्षायांअहिर्मृजान इति प्रतिहारमध्ये पदगीतः ।

आकारोऽत्वं पाशब्दःप्रकाण्यायां पार्थवाराहकुत्स-
रथीयेष्विन्द्रायेन्द्वितिक्रौंचे पूर्वयोः स्तोत्रीयपर्वोर्वाहा-
यिस्तोभेप्रत्यये जसावैश्वमनसे वृधावृहद्वारे पू-
र्वधाकण्वतरे द्विताद्युन्नाने दिवआप्रत्नंपीयूषमित्य-
त्रजयामहीयवोत्सेधेपू वैनेटनएकारे प्रत्यये आर्यः का-
लेय आसाद्दतीयोत्तमेजेतानामेंये इव्यविशीय इ-

संध्यरीतत्पदगीतसमाप्तम् ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
चतुर्थी कण्डिका समाप्ता ॥

*आकारोऽत्वं* अतः परमत्वं वक्ष्यते आकारोपेषु सा-
मसु अकारो भवति तान्युदाहरिष्यामः *पाशब्दः प्रकाण्या-
यां पार्थवाराहकु-त्सरथीयेषु* शुचिबन्धुः पावक इति पाशब्दः
पशब्दत्वमापद्यते एतेषु सामसु *इन्द्रायेन्द्वितिक्रौंचे पूर्वयोः स्तो-
त्रीयपर्वोर्वाहायिस्तोभे प्रत्यये*इन्द्रायेन्दाया क्रौंचे पूर्वयोः स्तो-
त्रीयपर्वोर्वाहायिस्तोभे प्रत्यये अकारः अत्वमापद्यते अर्कस्य यो-
नाइ अयाहाइ संतामृजन्ताहि अवाहायि *जसौवश्वमनसे*
*इन्दोयाराभिरोजसा आकारोऽत्वमापद्यते *वृधावृहद्वारे* म-
हान्महीऋधाएवा अत्राकारस्य अत्वापत्तिः *पूर्वधाकण्वतरे*
कण्वरथन्तरे अनुष्टुत्वा पूर्वधेतिअत्वापत्तिः *द्विताद्युन्नाने*
द्युन्नाने विश्वापरिभियाद्युवदधद्विनेति अत्वं । *दिवआप्रत्नं
पीयूषमित्यत्र जयामहीयवोत्सेधेषु* प्रत्नंपीयूषमित्यत्र महोगाहादि-
वआवारस्य अत्वापत्तिः । *उच्चैर्नेटतएकारेप्रत्यये* एइतेउद्या-
पनाएकारे प्रत्यये अत्वापत्तिः । *आर्यः कालेये*कालेये पस्यार्य
विश्वआर्यहति आकारस्य अत्वं । *आसाद्दतीयोत्तमे* सनोदूरा-

न्द्रातोकावार्पाहरेगीथेभ्यासेप्रत्यये दुहासखामत्स्वे- प्रत्यये वैराज आःकारोत्वं मदाः सुतासोमायां बृहद्रथन्तरयोः स्तावे तमाः श्यावे क्षाश्वाउवायांप्रत्यये नित्यवत्सातीपंगासिमास्विकारोत्वमिवोत्सेधे दुहानायां प्रतीनिद्विहिकादेव्वे अर्षसिकण्वंतरेडिन

---

षासाश्च । अत्र अत्वं आसाश्चेति । *जेतानार्मेधे* जेनारम- 'पराजितमिति आकारोऽत्वं *इष्वाविशीये* स्वासु विशीवेह- व्यान्यैरयेतिआकारोऽत्वं *इन्द्रातोकावार्पाहरे गीथेऽभ्यासे प- त्यये* वार्पा हरे अप्साइन्द्राय इपन्तोकाय उद्गीथे अभ्या- से प्रत्यये आकारस्य अत्वं *दुहासखामत्स्वेप्रत्ययेवैराजे* प- हावैराजेदुहासखामत्स्वशब्दे प्रत्यये अत्वं इहसुहमत्स्वा *आः- कारोऽत्वं* इदानीमाःकारस्यात्वमुच्यते *मदाःसुतासो- मायां बृहद्रथन्तरयोः स्तावे* बृहद्रथन्तरयोर्देशगच्छंतुत्वोमदाइति- प्रस्तावे अत्वं अहोइद्आयहहतीदश्वा रथन्तरे । *तमाः- श्यावे* श्यावाश्वे सुतासोमधुमत्तमाइतिप्रस्तावे आःकारोत्वं । *क्षाश्वाउवायां प्रत्यये नित्यवत्सनीपंगसिमासु *सोमोदुग्धाभि- रक्षाइति अत्रआउवायां प्रत्ययभूतायां आकारोत्वं नित्यवत् सा- तीपंगीसमासु *इकारोत्वं* अतःपरं इकारस्यात्वं वर्णित्य- ते । इवोत्सेधे दुहानायां उत्सेधे दुहानायां वास्तुनाइयेति इकारस्यात्वं *प्रतीनिद्विहिकादेव्वे *द्विर्हिकारे वामदेव्ये स्वंट- ग्राणिइन्द्रस्यमतीनि इकारोत्वं *अर्षंसिकण्वन्तरे *रूपरथन्तरे मृज्यमानायां अभ्यर्षभीमिइकारोत्वं *डिनउत्तरयोरास्तोभेप्रत्यये *शैखण्डिने उत्तरयोः स्तोत्रीययोः आकारे स्तोभे प्रत्यये इकारोत्वं । सप्तानिपानौ कल्शेषु सीदति पतिर्विश्वस्य भु-

उत्तरयोरास्तोभे प्रत्यय ओकारोत्वं नदंवउँस३ॅस्तोभ ॅंस्तोभे च महामिद् वेकारौकारयोरत्वमोष्टये महे- ङ्गीयेः कारोत्वं नोअर्पसिपुनानायाऽ साप्तमिकात्रि- णिधनायास्ययोर्यौधाजये च तृपो अचिक्रापा च त्रिणिधने ऽयं पूपायां च क्रौंचे वक्ष वृहतिस्तावे

---

घनस्य राजसि *ओकारोत्व *अतःपरमोकारस्यात्वमुच्यते । *नदंवऽस३ॅस्तोभे*सस्तोभेनदवनुदतीनामितिऽकारोत्व नद- वोअदती २ नां *ओस्तोभे च महामिन्द्रोनूनोरायि महामिद- घुहा २३ झुहा १ सत्रासाहीये च *एकारौकारयोर- त्वमोष्टये *एकारौकारयोरत्वं ओष्टये प्रत्यये उदाहरणानि आहर्यतो अर्जुनो अक्तेद्वार्हिकारे वामदेव्ये अध्वर्योएहसोप- र्णरारया ऊर्दारयिष्ठे एवमादीनि *महेङ्गीये *पन्नायङ्गीपे य- त्वेधीतोश्रुपतिमाहणीमहे । *अःकारोत्वं *अतःअः- कारस्य अत्वमापद्यते इत्यधिकारार्थम् *नो अर्पसिपुना- नाया३साप्तमिकत्रिणिधनायास्ययोः *अपोवसानः साप्तमिके आयास्ये त्रिणिधनायास्ये च अःकारः सविसर्गः अत्वमा- पद्यते *यौधाजये च *अपोवसानः अत्वमापद्यते *तृपो अचिराणा च त्रिणिधने *त्रिणिधनायास्ये तृपो अचिक्रापा च गोभिरंजान इति अःकारोत्व *अप पूपाया च क्रौंचे* अय पूपाया च मध्ये निधने क्रौंचे सोमः पुनीनो अ- र्षसीति अःकारोत्वं *वक्ष वृहतिस्तावे *वृहतिस्तावे अ- क्षरमध्ये अय पूपातृतीयाया पञ्चारे प्रत्यये अःकारोत्वं परउत्सेधे दुहानाया घृणात्वश्रत्पातिमूर्व पर इति अःकारोत्वं

पर उत्सेधे दुहानायां पुरोमत्स्वे प्रत्यये वैराजे पुरुषः शब्दः प्रथमः स्वरोव्याहृतिषु कामेच सर्वासु मदभियरुहशब्दामध्यमे विकल्पे ॥ ५ ॥

वृद्धमृवर्णऽसर्वमार्भवति पकारस्पर्शयोः प्रत्यययोरन्ताः का ३२३ र्णाका ३२३ ह्री एवंजातीयानि तृकारस्तु न सर्वेषु स्पर्शेष्वार्भवति यथायोजा

*पुरोमास्वे प्रत्यये वैराजे *पुरःशब्दो अःकारःमास्वे प्रत्यये अस्त्वमापद्यते *पुरुषशब्दः प्रथमस्वरोव्याहृतिषु *व्याहृतिषु पुरुषशब्दः प्रथमस्वरे अःकारोत्वं भूर्भुवःस्वःसत्यं पुरुष इति पञ्च व्याहृतयः *कामे च सर्वासु मदभियरुहशब्दा मध्यमे विकल्पे *निधनकामेच मदाभियरुह एतेषु अःकारः अस्त्वमापद्यते ।

अत्वं परिसमाप्तम् ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य पञ्चमी कण्डिका समाप्ता ।

*वृद्धमृवर्णऽसर्वमार्भवतिपकारस्पर्शयोः प्रत्ययपोः प्रान्ताः का३२३र्णाका ३२३ह्री १३ एवं जातीयानि*इदानीमार्भावोवक्ष्यते ऋवर्णे वृद्धं पकारस्पर्शयोः प्रत्ययपोः ककारादिमकारान्ताः स्पर्शास्तेषु प्रत्ययेषु सर्वमार्भवति । यथोदाहृतं *तृकारस्तु न सर्वेषु स्पर्शेष्वार्भवति । यथा योजा ३२४ रितृ २ भ्योमघना ओतृ ३२३४ पाद *पूर्वलक्षणेन सर्वव्यंजनावस्थितस्य ऋकारस्य वृद्धस्य आर्भावप्राप्तस्य तृकारास्थितस्य प्रतिषेधः

३।४ रितृभ्योमघवाओत् ३१३४ पा ३ तृकारस्त- पयोः प्रत्यययोराभवति ता ३७.साँयामाधिरो तार्पाणा ३२३४ अगृकारोहकारेपृकारश्निकारेशङ्का ३१३ हंपा ३ रुचद्वसः पार्द्धिनरग्ना३पा३१र्यामे चार्यगौरिति न- कृश्चोनेप्रत्यय उक्तस्तत्भ्यासादौ व्यंजनलोपः श्वो- नका ३३ श्रोनका ३३ यदुक्तंपुरस्तात्पकारस्पर्शयोः प्रत्ययोराभवतीतिनत्रापवादाः सप्तमघाप्वाच- नामेघे चक्रमाशास्त्य एतदेवोदाहरणं यूथादानायां कौल्मकण्वगृहतोः संगृभात् न इत्यत्राकूपारे मर्मृ-

*तृकारस्तपयोः प्रत्यययोरार्भवति तार्चायामविरोसा ३ पा ३ पा ३३३७*किं सर्वत्रैव तृकारस्य अनाभावः!? न, किं तर्हि? तकारपकारयोः प्रत्ययोरार्भावः यथोदाहृतं *गृकारोहकारे पृकाराश्निकारेशङ्का ३ हंपा ३ रुचद्वसः पा ३ शिरिसां ३ पा ३३ यामेचायङ्गौरितिनकृश्चोनेप्रत्यये *सहोदेर्घेणमने नकृकारः *श्चोनेप्रत्ययेआर्भवति *उक्तस्तत्भ्यासादौ व्यंजनलोपः श्वो- नका ३३ श्रोनका *प्रसंगादिदमुच्यते । यस्यत्पुपरिष्टाद व्य- ञ्जनमपराङ्गविरामे लुप्यते ऽभ्यासे चेति तदत्राभ्यासप्रत्ययस्य रे- फस्य लोपः *पदुक्तं पुरस्तात्पकारस्पर्शयोः प्रत्ययोरार्भवती- तितत्रापवादाः *सप्तमेवाप्तृथाश्च नामेघे *उपस्त्वाकाम इ मह- सप्तमेद्वात्रृश्चंसनामेघेतयोरनाभावः *चक्रमाशास्त्ये *शास्त्ये गौरीविते चक्रमामलरायमहत्यनाभावः *एतदेवोदाहरणं यू- थादानायां कौल्मकण्वगृहतोः *आपुरन्दरस्यचक्रमेतिअनाभावः *संगृभातुन इत्यत्राकूपारे *राज्याकूपारोचेत्रंग्राभःसंगृभेत्यना- भावः *मर्मृस्त्वासु दर्घे *स्त्वासु दर्धश्रवमे मर्मृज्यन्तेदेवयव इति प्रतिहारे अनाभावः *एतदेवोदाहरणमभिक्रन्दायां धेनुर-

स्वासुदैर्घे एतदेवोदाहरणमभिक्रंदायां धेनुवरुणयोर्गिरस्तइंद्रायां च सꣳहिते नभृप्रसुन्वानायां गौतमसाध्रश्यावाश्वौदलाकूपारदासवैश्वामित्रस्वारकौत्सकरावतरदोहनरेषु नृभिः प्रत्तꣳसधस्थमित्यत्रैडयास्यगोगज्ञीयपेधाभीशाप्कारसोमवरुणनमतरजंभेष्वेतदेवोदाहरणमभिसोमाध्यास्याꣳहद्दुत्याग्नेस्त्रिणिधनहन्मनेषु धर्त्रायां ज्ञीयकावाभिक्रन्देष्वयद्युतानायां च तमसोर्के ककृतंतेमदायाꣳहारिभरवारेष्वेतदेवोदाहरणमयंपुनानायां ज्ञीये तंत्वामदायां

रुणयोः *अभिक्रन्दायांꣳमृंजानोविभिः सिन्धुभिर्हेपेतिमहनान्धेनुवरुणसाम्नोरनाभावः *गिरस्तइन्द्रायां च सꣳहिते *गिरस्तइन्द्रायांमꣳहिते मर्मृज्यन्ते अपस्युवइत्यनाभावः *नभृप्रसुन्वानायां गौतमसाध्रश्यावाश्वौदलाकूपारदासवैश्वामित्रस्वारकौत्सकण्वतरदोहनरेषु *प्रसुन्वानायां हतामस्वंनभृगव इति गौतमसाध्रश्यावाश्वौदलाकूपारदेवोदासवैश्वामित्रस्वारकौत्सकण्वतराज्यदोहरथन्तरेषु अनाभावः *नृभिः प्रत्नꣳमधस्थमित्यत्रैडयास्यगौङ्गज्ञीयपेधाभीशाप्कारसौमवरुणतमतरजम्भेषु *नृभिर्द्धोतोविचक्षणइसेतेषुसमासुअनाभावः । *एतदेवोदाहरणमभिसोमाध्यास्यायाꣳहद्दुत्याग्नेस्त्रिणिधनहन्मनेषु *नृभिर्येमाणोहर्यतोविचक्षणइति वार्हद्दुत्यादिष्वनाभावः *धर्त्रायां ज्ञीयकावाभिक्रन्देषु *धर्त्रायां दक्षोदेवानामनुमाद्योनृभिरितिज्ञीयकावत्वाभिक्रन्देषु अनाभावः *अवद्युतानायां च तमसोर्के *दीर्घतमसोर्केअवद्युतानायां नृभिर्येमाणः कोश आहिरण्यय इत्यनाभावः *ककृतं ते मदायाꣳहारिभरवारेषु *उलोकक्रन्नुपाद्रिव इति हारिवर्णसौमरवारवंतीयेष्वनाभावः *एतदेवोदाहरणमय

च सꣳहिते मोषुवत्सासुच ॥ ६ ॥

समृत्रैशोके वृक्तवर्यंघत्वायामभिनिधने काण्वे धृ-
ष्णियेत्सानोर्वꣳशीय इवोपदगुपत्वाजावारतृतीयाया-
मेनदेवोदाहरणमयꣳस्रूयायामामहीयवद्योधीयर्पभाव-
पायमानाशुमार्गासौम्यैटतसाकेघृपिकाच्छिद्रशुदेव्याद्वे-
ज्योतिपेषु तस्त्रभिः पाहिरौरवे स्यपुरुकूछग्व्यूहारमान-

---

पुनानायांह्नीये *अयंपुनानायां यज्ञायज्ञीये अगꣳन्मिन्धुभ्यो भ-
मवद्दुलोकहृदित्यनाभावः । *तन्त्वामदायां च सꣳहिते*तन्त्वा-
मदायां सꣳहिते ब्लोकक्तन्नुमीमह इत्यनाभावः *मोषु वत्सासु
च *मोषुनित्यवत्सासु अभीकेचिद्दुलोकक्कादित्यनाभावः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य
षष्ठी कण्डिका समाप्ता ॥

*समृत्रैशोके *त्रैशोके अपिकर्णेतर स्विनः समृ-
क्तभिरित्यनाभावः *वृक्तवर्यंघत्वायामभिनिधने काण्वे
*आपोनवृक्तबर्हिषइअभिनिधने काण्वे अनाभावः । *धृष्णि-
येत्सानोर्वꣳशीये* उद्वꣳशीये यूथेनवृष्णिरेजतेइति अनाभा
वः *इवोपदगुपत्वाजावारतृतीयायाम *भद्राम्र्ूपंइवोपदगिति-
वारवन्तीयेऽनाभावः *एतदेवोदाहरणमयꣳस्रूयायामामहीयव-
घोधीयर्पमयावपानौशुमार्गीसौम्यैटनसाकेषु *अयꣳस्रूपंइवोपदगि-
तिएतेषुसामस्वनाभावः *काशिपिकाच्छिद्रंदेव्योद्वज्योतिषेषु* काशिपि-
मनायकशिपिकादिनिवामदेव्येउद्वद्वार्गवत्रैश्वज्योतिषेष्वनाभावः । *त
स्त्रभिः पाहिरौरवे* पाहिनस्त्राभिरितिरौरवेऽनाभावः *अस्य
पुरुकूछग्व्यूहारमानवयोः*पौरोअश्वस्यपुरुकृद्गवामित्यारायणपूर्वेमा-

वयो रुरुकृदुकुविल्लुनायां वोधीये पृथिवीमिदंश्यन्ते बृहति च यज्ञायज्ञीया मृधक्सोमदविद्दीये ऽभृद्धमथार्भवति पभेधिवी घृष्णुवृष्णि घृपन्वारे मृत्यघेनी कृण्वते क्रौञ्च मृजयकृण्वतरेकृतनच्छकुनिमाज्यमानः सुहस्तिया ३ निर्गाअका ए ३१ तदो ३ तृंपायामृवर्णप्राप्त रेफः प्रथमस्वरायां वृद्धायामपदिश्यतेऽत्र २३३ पा ३६ रथंतरे च पूर्वदेव्यहृदायेययोर्ऋवर्णं प्राप्तमकारः

---

नयोरनार्भावः *उरुकृदुकुविल्लुनायां वोधीये *कुविल्लुनायां जरावोधीये उरुकृदुरुणस्कृधीत्यनार्भावः*पृथिवीमिदंश्यन्ते *अभिनिधेने काण्वेअनुमातरंपृथिवीमित्यनार्भावः *बृहति च यज्ञायज्ञीयायां *यज्ञायज्ञीयायां बृहति तत्पृथिवीमित्यनार्भावः *ऋधक्सोमदविद्दीये*दविद्युतत्यारुचेतियज्ञायज्ञीये तृतीयायामक्षरसंसर्गप्रस्तावे ऋकारस्यानार्भावः*अवृद्धमप्यार्भवति*अवृद्धस्याप्यार्भाव उपदिश्यते* पभे धिवी *शाकरपभे पृथिवी चाविजन्निप इत्यार्भावः *घृष्णुवृष्णि* सतानीकेव प्रजिगाति-घृष्णुवृद्धस्यार्भावः *हपन्वारे* सुरूपकृत्नुमितिशार्वतीये आर्भावः *मृत्यघेनौ* महतो धेनौ ते अस्य सन्तु केतवेमृत्यवार्भावः *कृण्वते क्रौञ्चे* अयं पूषायां क्रौञ्चे सोमासः कृण्वत इत्यार्भावः *मृजयकृण्वतरेकृतनच्छकुनिमाज्यमानः सुहस्तिया ३ निर्गाअकाए ३१ तदो ३ *अवृद्धमप्यार्भवतीतिप्रमाणंकृत्वाप्रदर्शनंकृतम् *तृंपायामृवर्णप्राप्तरेफः प्रथमस्वरायां वृद्धायामुपदिश्यतेऽत्र २२३ पा ३६ *आर्भावतृंपाव्यस्नुहीति अवतृंकारस्तयोरार्भवतीतिऋवर्णमेव प्राप्तं वचनात्प्रथमस्वरायाऽवृद्धायां रेफोऽपिचउपदिश्यते यथोदाहृतं *रथन्तरे च* रथन्तरे च एत-

क्रियतेनाऽध्यर्णवन् ॥ ७ ॥

ऋचि प्रश्लिष्टाः स्वरसन्धयः पादमध्ये साम्नि विवृता ये तान्वक्ष्यामो मंहिष्ठस्य इमा उवायां वारदेव्यरथबृहत्सु शुध्ये तु प्रश्लेषोभीन्द्रमभिवायुमि-

देव व्याख्यातम् । *ऋग्वन्देव्यबृहद्रथीयपयोर्ऋवर्णमात्रमकारः क्रियतेना ३ यर्णवन् *तमभिप्रमस्तेवसवोऽपूर्णवन्निति वामदेव्यबृहद्रथीयवयोरद्वदत्वादकार एव मात्रो वचनादकारः क्रियते यथोदाहृतम् ॥

आर्षीभावः समाप्तः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य सप्तमी कण्डिका समाप्ता ॥

*ऋचि प्रश्लिष्टाः स्वरसन्धयः पादमध्ये *ऋग्विषये पादमध्ये स्वरसन्धिर्यत्र भवति सोऽप्य(रूप)सन्धिना, यथा अग्निमीडिष्वावसे-महेव नस्त्वाऽद्रिवइति तथादित्यव्रते वयंएवं यत्र स्वरयोरेकीभावः क्रियते ॥ प्रश्लेष उच्यते तथा ऽत्यन्तलुप्तसन्धिना यत्रस्वरस्य लोपः क्रियते स च प्रश्लेषः । यथापादेऽस्यसर्वाभूतानि, सोय-मनेन सूत्रेण सिद्धोपन्यासः क्रियते विशेषविवक्षया *साम्नि विवृता ये तान्वक्ष्यामः *एवं पूर्वलक्षणेन पादमध्ये संश्लिष्टा ये सामविषये विश्लिष्टा भवन्ति तानुच्चारयिष्यामः *मंहि-ष्ठस्यइमाउवर्णावारदेव्यरथबृहत्सु *अयंवामंहिष्ठस्य इतिवारदे-वीयादिषु विश्लेषः *शुध्ये तु प्रश्लेषः* एष एवशब्दः शुध्ये प्र-श्लिष्यते *अभीन्द्रमभिवायुमित्यत्रपार्थे* आभिवायुं वीश्वपार्थं-णान इति पार्थे अभीन्द्रस्पर्णमिति विश्लेषः *केतवः स्वासु मरुता* स्वासु मरुता येनौ ते अस्य मन्तु केतवो मृडय इति विश्लेषः*

स्यत्र पार्श्वे केतवः स्वासु महता गर्भोमहत्तत्सोमा-याऽसर्वत्र छन्दसि तु प्रश्लेपः प्रसुन्वानायाऽ सर्वत्र पवस्वयस्ते मदायाऽसर्वत्र सोमसामसाहीयशांमदेषु प्रश्लेपः पुरोनःसर्वत्र मासिः माशिवासः सर्वत्र इयाद्रिर्नार्वाचपिवासोमायामृषभे प्रसमवाजेषुनः सर्वत्र रथोऽर्धे तु प्रश्लेपो नोअविभिः सुपावसोमायाऽ सर्वत्राघ्राट्‌दंष्ट्रार्कपुष्पसंकृतियशःसु प्रश्लेपः ॥ ८ ॥

*गर्भोमहत्तत्सोमायां सर्वत्र* महत्तत्सोमायां अपांयद्गर्भोऽवृणीतेतिसर्वसामसु विश्लेषः *छन्दसि तु प्रश्लेपः* वेदेतु प्रश्लेपः छन्दःशब्देन वेद उच्यते *प्रसुन्वानायां सर्वत्र* प्रसुन्वानायांधसइति सर्वसामसु विश्लेषः *पवस्वयस्ते मदायाऽसर्वत्र* यस्ते मदायां तेनापवस्वांधसेतिसर्वत्रविश्लेषः *सोमसामसाहीयशांमदेषु प्रश्लेपः* तेनापवस्वांधसेतिसोमसामादिषु प्रश्लेपः *पुरोनः सर्वत्र* मेद्धोअग्नेदीदिहीति पुरोनोजस्रयेतिसर्वत्र विश्लेषः *माशिवासः सर्वत्र* । माशिवासोअवक्रमुरितिसर्वसामसु विश्लिष्यते *इयाद्रिर्नार्वाचपिवासोमायामृषभे* पिवासोमायां वैराजर्षभे इयेश्वाद्रिः सूयतोनार्वा इति विश्लेषः *प्रसमवाजेषु नः सर्वत्र* प्रसमवाजेषुनोवेति सर्वत्र प्रश्लेपः । *रथोऽर्धे तु प्रश्लेपः* एष एव शब्दो रौरवोर्द्धीये प्रश्लिष्यते *नोअविभिः सुपावसोमायाऽसर्वत्र* सुपावसोमायां नूनं पुनानो अविभिरितिसर्वसामसु विश्लिष्यते । *आघ्राट्‌दंष्ट्रार्कपुष्पसंकृतियशःसु प्रश्लेपः* एष एव शब्दः आघ्राट्‌दंष्ट्रादिषु प्रश्लिष्यते ॥ ४ ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य अष्टमी कण्डिका समाप्ता ॥ ८ ॥

सुते चित्वानवे वृद्धाच सर्वत्राऽयास्ये तु प्रश्लेप उदिन्द्र त्वंश्त्येहीत्यत्र कण्वबृहति पूर्वकल्पे स्तावे च जम्भे प्रतिहारे कौल्मे स्तावे गायंतोयूथादानायां कण्वबृहति जम्भे च तवाय्याया५सहोदैर्घमराययो वैराजे च स्तावे तवद्वितीयायामामीशवद्गैगतयो रहस्ये च बृहत्यरुपीप्रतिष्णासूनरीद्वितीया-

---

*सुतेचित्वानवे* उत्तरे मानवे सुतेचित्वाप्सुमदाम इति विश्लेपः *वृद्धाच सर्वत्र* वृद्धात्परस्यावैव एव शब्दः सर्वत्र विश्लिष्टः *आयास्ये तु प्रश्लेपः* आयास्ये तु वृद्धात्परस्य प्रश्लेपः *उदिन्द्र त्वं होहीत्यत्र कण्वबृहति पूर्वकल्पे* त्व५होहित्वेरयइति कण्वबृहति उदिन्द्राश्वमिष्टप इति पूर्वकल्पे विश्लेपः *स्तावे च* प्रस्तावे च कण्वबृहति उदिन्द्राश्वमिष्टपइति विश्लेपः *जम्भे प्रतिहारे* बृहत्सिधने वार्कजम्भे उदिन्द्राश्वमिष्टप इति प्रतिहारे विश्लेपः *कौल्मे स्तावे* कौल्मलबार्हिषे च प्रस्तावे उदिन्द्राश्चेति विश्लेपः *गायन्तोयूथादानायां कण्वबृहति* यूथादानायां कण्वबृहति इन्द्रगायन्तोवसइति विश्लेपः *जम्भे च* वार्कजम्भे च इन्द्रं गायन्तोवम इति विश्लेपः *तवाय्याया५सहोदैर्घमराययोः* सहोदैर्घमराययोस्तवाह५सोमेतिअस्मिञ्छन्दे विश्लेपः *वैराजे च स्तावे* महावैराजे प्रस्तावे आयायामेव तवाह५सोमेतिविश्लेपः *तवद्वितीयायामामीशवद्गैगतयोः* तवाह५सोमद्वितीयायां आभीशवद्गैगतयोस्तवाहंनक्रसुतसोमेतिविश्लेपः *रहस्ये च बृहति* तवाहंसोमेति द्वितीयायां तवाहंनक्तेति विश्लेपः *अरुपीप्रतिष्णासूनरीद्वितीयायां घोषीये* अराघोषीये प्रतिष्णासूनरी-

यां बोधीये देवाजरमाते अग्न इषीमहीत्यत्र त्वंनइन्द्रौपगवे चासाद्वंतीयोत्तमतृतीयाया मापप्रथोभेयदिंद्रायाॅंश्येने स्यार्चंतोवैराजर्षभे दैवांजसाबृहति महीनधारागोराजा च काव्ये पादांत्यात्परः स्वरोविकृष्यते यथानूपतावद्युतानायाॅंशाचिपूजनायंत इन्द्रद्वितीयायां दृषाय विधर्म्मणि गामिष्ठानसॅंस्कृतमित्यत्रौशन एवंजातीयानि ॥ ९ ॥

---

द्वितीयायामन्वेषचित्रारुपीति विश्लेषः *दैवा जरमा ते अग्न इषीमहीत्यत्र* द्युमन्तं देवाजरामिति आते अग्न इषीमहीत्यत्र विश्लेषः *त्वमइन्द्रौपगवे च* उत्तरे औपगवे च त्वन्न इन्द्राभरेति विश्लेषः *आसाद्वंतीयोत्तमतृतीयायाम्* उत्तरे सास्वंतीये स्वाम्नु तृचे उत्तमायां सनोदूराच्चासाच्चेति विश्लेषः *आपप्रथोभे यदिंद्रायाॅंश्येने* यमेयदिन्द्रायां श्येने आपप्राथोपा इवेति विश्लेषः *स्यार्चतोवैराजर्षभे* बोधाविमस्यार्चतोमनीषा इति विश्लेषः *देवाजसा बृहति* स्वमग्ने बृहति पयश्च देवांजसेति विश्लेषः *महीनधारागोराजा च काव्ये* अन्नकाव्ये महीनधारासन्य अयेगोराजाप्यस्तविष्य-त इति च विश्लिष्टौ *पादान्त्यात्परः स्वरोविकृष्यते* पादमध्ये स्वरसन्धिविश्लेष उक्तः इदानीं पादान्ते स्वरयोर्विश्लेष उच्यते *यथानूपतावद्युतानायाम्* शाचिपूजनायन्त इन्द्राद्वितीयायां दृषाय विधर्मणि गोमिष्ठा नसॅंस्कृतमित्यत्रौशन एवं जातीयानि *पादान्त्यात्परः स्वरोविकृष्यत इत्यत्रैतान्युदाहरणानि॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य नवमी कण्डिका समाप्ता ॥ ९ ॥

अथापवादाः प्रश्लिष्टा अंशोरित्यस्य शब्दस्याद्धात्परस्य प्रश्लेपः सर्वत्रेह न यदिन्द्रचित्रायां वसिष्ठप्रियपंगयो दिवस्पदेतयोप्पवित्रायां श्रीये मोपुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे धियोग्नेभरामेध्यायामंते जिपुसन्तानिनि त्वचित्सुष्वाणायामांधुंगवेंधस स्तंवोदस्माध्यायामाथर्वणमौभरयोः प्रत्यस्मैतृतीयायां च रथंतरे ऽयासृजोरातयइत्येतौशब्दौ मोषु वत्सा-

---

पादान्त्यात्परः स्वरोविकृष्यत इत्यस्यापवादः *अथापवादाः प्रश्लिष्टा (इति) अंशोरित्यस्य शब्दस्याद्धात्परस्य प्रश्लेपः सर्वत्र* सिषुर्न्नपिप्रेअर्णसोअंशोः पयसेतिअद्धात्परस्य सर्वत्र प्रश्लेपः द्विहिकारादिषु *इह न यदिन्द्रचित्रायां वसिष्ठप्रियपङ्गयोः* यदिन्द्रचित्रायां इह नास्तित्वादातपद्रिव इति वसिष्ठप्रियातीपङ्गयोः प्रश्लेपः *दिवस्पदे तयोप्पवित्रायां श्रीये* यज्ञायज्ञीये दिवस्पदे अर्वन्तो अस्य तन्तवोप्यास्थिरान्निति प्रश्लेपः *मोपुत्वापार्श्वे श्रुधिशब्दोऽभ्यासे* मोपुत्वायां गायत्रपार्श्वे [illegible] वा सन्तु यश्रुधीमेहितेयमकृत इत्यभ्यासविषये प्रश्लेपः *धियोऽग्नेभरामेध्यायामन्ते* समन्तेभरामेध्यायां जीवातवे प्रतरा साधया धियोग्ने सख्ये इति प्रश्लेपः *जिपुसंतानिनि* सन्तानीनि तमिन्महत्स्वाजिषूतिमर्भेत इति प्रश्लेपः *त्वचित्सुष्वाणायामान्धीगवे* त्वधीत्वमस्मभ्यमभित इति प्रश्लेप *अन्धसस्तंवोदस्माध्यायामाथर्वणमौभरयोः* तंवोदस्माध्याय अन्धसोभिस्वस्वरसेधेनिप्रश्लेपः *प्रत्यस्मै तृतीयायां च रथन्तरे *एष एव शब्दः प्रत्यस्मैतृतीयायां रथन्तरे इदन्धसोध्वर्यो प्रभरासुत पिबेत प्रश्लेपः *अयासृजोऽरातयइत्येतौ शब्दौ मो

सु युजानिरित्तिसपायांरौरवे घोधयोमहेनायां वा-
जीये ह्वितेवसोत्रै ककुभे तमोर्यायां वर्णेऽर्चतप्रिये
ब्रह्मयुजाकक्षे घसोद्रयोवात्समे नदीधिमःश्राय-
न्तापांसौभरे सैन्योसिवार्हद्गिरसंतनिनो वाह्नो-
ग्नेविवस्वद्वितीयायांश्रुध्ये धृष्णउधस्यत इत्यत्र वा-
जीये धारयासेघे धियोसेधेजमयर्त्तचा ऽनेतमयकमश्वे

सु वत्साहु *सोषु वत्साहु अवासृजोपराच इति अ-
रातयोर्योनः सन्तइति च प्रश्लेषः *युजानिरित्तिसपाया
ंरौरवे* रौरवे तरणिरित्तिसपायां वाजंपुरन्ध्यायुजावइन्द्रमि-
ति प्रश्लेषः *घोधयोमहेनायां वाजीये* रायोवाजीये महे-
नायां योधोराय इति प्रश्लेषः *ह्वितेवसोत्रैककुभे* त्रैककुभे
मंहिष्ठेन्द्रप्रबीषि ते व इति च सोऽस्मान्कदाचनेति च प्रश्लिष्टौ
*तमोर्यायां वर्णे* रहस्ये शाकरवर्णे सोमघुमचमोभिद्रोणानीति .
प्रश्लेषः *अर्चतप्रिये* वासिष्ठप्रिये इन्द्राय नूनमर्चतोत्क्थानि
चेति प्रश्लेषः *ब्रह्मयुजाकक्षे* औशनसे यद्दहरीब्रह्मयुजेह्व-
रेवेति प्रश्लेषः *घसोद्रयोवात्समे* सौद्रे वात्समे अन्धसो-
न्धस इति अद्रयोद्रयोऽय इति च प्रश्लिष्टौ *नदीधिमः श्रायन्ता-
यां सौभरे* सौभरे नदीधिमोर्ध्वरात्रिमिति प्रश्लेषः *सै-
न्योसिवार्हद्गिरसन्तनिनोः* वार्हद्गिरसन्तनिनोः वीरसेन्योसि-
भूरिपरादद्दिरितिप्रश्लेषः *वाह्नोऽग्ने विवस्वद्वितीयायांश्रु-
ध्ये* द्रूनो अग्नि हव्यवाह्नोऽग्ने रयीरितिप्रश्लेषः *धृष्ण-
उधस्यत इत्यत्र वाजीये* रायोवाजीये नवजातस्य धृष्णोऽग्ने
चरन्तीति प्रश्लेषः *धारया सेघे* उत्सेधे पुनानः सोम-
धारयेति प्रश्लेषः *धियोसेघे* उत्सेधे एव अस्मांऽवन्तु

तताँ३ इथो दैर्घे अबस्यवोदैवये अवस्यवोदैव्य ॥ १० ॥

यः संयोगोपधान्तः कश्चित्संकृष्टः कश्चिद्विकृष्ट-स्तत्र संकृष्टग्रहणं न्यर्षःसाहीयपर्णवर्णमित्रविलम्येषु नैडे दिव्यंऊपर्पसिपशःसर्वसर्पपुष्पेष्वापृच्छ्यमधृद्धं

ते धिय इति प्रश्लेषः *अमवर्त्ते च* जमदग्नेरभीवर्ते च अस्मांअवन्तु ते धिय इति प्रश्लेषः *अग्ने तमद्य कमश्वे* साकमश्वे अग्ने तमद्येति प्रश्लेषः *तताँ३इथो दैर्घे *त्वेसोमप्रथमायां दैर्घे तताँ३इयोत्सम्रकामिति प्रश्लेषः *अवस्य वोदैव्ये अवस्यवोदैव्ये* एदुमधोर्मदिन्त्रामदैव्ये अहमाहिअवस्य वो मायुभिरिति प्रश्लेषः ।

प्रश्लेषविश्लेषो समाप्तौ ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य दशमी कण्डिका समाप्ता ॥ १० ॥



*यः संयोगोपधान्तः कश्चित्संकृष्टः कश्चिद्विकृष्टस्तत्र संकृष्टग्रहणम्* यः कश्चित्संयोगोपधान्तः कश्चिद्दान्तः तयोश्चोहगीतौ कस्य चित्संकर्षः कस्यचिद्विकर्षः । तत्र सन्देहस्तन्निर्णयार्थं यत्संकृष्टं तदधिकृतम् । *न्यर्षः साहीयपर्णवर्णमित्राविलम्येषु* पुनाविश्वान्यर्ष इति सत्रासाहीयस्वारसौपर्णामित्रविलम्बसौपर्णेषु एतेषु सामसु न्यर्षशब्दः संकृष्टः अन्यत्र विकृष्टः।*नैडे* पूर्वसूत्रात् त्रिष्वपि सौपर्णेषु सङ्कर्षः प्राप्तः ऐडसौपर्णे विकर्षः *दिव्यंऊपर्पसि पशः सर्वसर्पपुष्पेषु* दुहानऊधर्दिव्यं वरुणं वाऊपर्पमीति च एतौ शब्दावेतेषु सामसु संकृष्टौ *आपृच्छ्यमधृद्धं सर्वत्र* आपृच्छ्यमधृद्धं मत् सर्वसामसु संकृष्यते *अभीवर्त्ता-

सर्वत्र मदेदश्वाकूलीये जिह्मनकुन्न्यश्च हीयस्योद्गीथे विश्वारूपाश्विनोर्श्रितपर्णाकूपारपुष्पमरायेषु नाभ्यासे त्वद्रयश्रितेषु वैधनेचामराये त्वग्रयेस्वासु दैर्घ्यमा- यांसूर्यस्याभिप्रियाणीत्यत्र स्वारकावज्ञीययो रेय एव शब्दः सूर्यवतीष्विनोराजद्वितीयायां चौशने ऽति- सूर्यपुष्पमरायकीर्त्येष्विन्द्रः सूर्यंसुचनैयकीर्त्येष्विव

---

दिषु विकृष्टं *मदेदश्वाकूलीये* अस्येदिन्द्रोमदेष्वापूर्वे रोहित- कूलीये संकृष्टः* जिह्मनकुन्न्यश्च हीयस्योद्गीथे *यज्ञायज्ञीयोदीर्घ- जिह्वयं इन्दुरश्वोनकृत्य इति च यज्ञायज्ञीये उद्गीथे संकृष्टौ* विश्वारूपाश्विनो श्रितपर्णाकूपारपुष्पमरायेषु* सोमविश्वारूपाधि- वेति एतेषु सामसु संकृष्यते । पर्णाकूपार इति परित्यंहर्यतं हरिमितिपदस्वयोनिः *नाभ्यासे* पर्णाकूपारे अभ्यासविषये विश्वारूपेति विकर्षः *त्वद्रयश्रितेषु* यज्ञायसन्त्वद्रय आश्वि- नोश्रितादिषु सामसु त्वशब्दः संकृष्टः *वैधने च* वैधने च सोमसाम्नि यज्ञाय संत्वद्रय इति संकृष्टः *अमराये* मराये त्वद्रयशब्दोविकृष्टः *त्वग्रये स्वासु दैर्घ्यमायां* मस्तोमाय- त्वग्रय इति स्वासु दैर्घ्यमत्रसे मध्यमायां संकृष्टः *सूर्यस्याभि- प्रियाणीत्यत्र स्वारकावज्ञीययोः* आभिप्रियाणीत्यत्र आसूर्यस्य वृहत इति स्वारकावे यज्ञायज्ञीये च संकृष्टः *एप एव शब्दः सूर्यवतीषु* सूर्यस्येव रश्मय एताः सूर्यवतः एतासु सू- र्यशब्दः संकृष्टः *इन्द्रोराजद्वितीयायां चौशने* औशने इन्द्रोरा- जाद्वितीयायां ऊर्द्धमानुस्सूर्यस्य स्तपायाश्रितिसंकर्षः *अतिसूर्य- पुष्पमरायकीर्त्येषु* तथाहःसोमतृतीयायां घृणातपन्तमतिसूर्यपर- द्वेषु सामसु सूर्यशब्दःसंकृष्टः *इन्द्रः सूर्य स्सुचनैयकीर्त्येषु* इन्द्रः

ण्वोस्तं स्वाधर्त्तायाऽहाविष्मतसन्तनिनो विभापा प्रसुन्वानाद्वितीयायाॅऽरथंतर इदाद्योमानवे स्युपमाछन्दसे पूर्व्योऽपामतीद्वितीयायां झीये स्वामभिदॅऽग्रोत्तरे मर्याद्विहिंकहारभारमानोत्तररौरतरेपूतस्युर्वैरूपान्तरिक्षहस्वासु दृष्ध्ययावैरूपे दृर्यदृय-

*ण्वोस्तन्स्वाधर्त्तायां हाविष्मतसन्तनिनोः* दृपापवस्वमध्यमायां तन्स्वाधर्त्ताः रमेयाण्वो इति ण्वोशब्दः हाविष्मतसन्तनिनोः संक्रम्यते *विभापाप्रसुन्वानाद्वितीयायां रथन्तरे* रथन्तरे प्रसुन्वानाद्वितीयायां भुंजनः पुत्रऽ०णोरितिण्वोशब्दः संक्रष्टो ( विकृष्टो वा एव विकृष्टः ) *इदाद्योमानवे* उत्तरे मानवे स्वामिदाद्योनर इति द्योशब्दः संक्रष्टः *स्युपमाछन्दसे* माधुछन्दसे तवश्रवाऽस्युपइतिस्युशब्दः संक्रष्टः *पूर्व्यो दृपामती द्वितीयायां झीये* यज्ञायज्ञीये दृपामतीद्वितीयायां मनीपिभिः पूर्व्यं इतिर्व्यशब्दः संक्रष्टः *स्वामभिदऽग्रोत्तरे* उत्तरे आग्नादऽग्रे स्वामभिमनोनुम इति स्वाशब्दः संक्रष्टः *मर्याद्विहिंकहारभारमानोत्तररौरतरेपु* पवन्तेमर्यमदमितिद्विहिंकारहाराएणभारद्वाज उत्तररौरवरथन्तरेपु एतेपु सामसु यशब्दः संक्रष्टः *उतस्युर्वैरूपान्तरिक्षहस्वासु* पक्षनिधनवैरूपहस्वावैरूप अन्तरिक्षेपु एतेपु सामसु यथार्थं ( एतंमुपी ) उतस्तुरितिस्यशब्दोवैरूपादिपु संक्रष्टः *दृष्ययावैरूपे* आपमायमर्हिनाहृष्ययादृयन्नितिपक्षनिधनवैरूपे यथार्थ इति मध्यमायां दृष्ट्या इति दृयाशब्दः संक्रष्टः *दृर्यश्यपिपासोमाद्वितीयायां सहोदैर्वे* सहोदैवमले 'पिबासोमाद्वितीयायां' येन दृत्राणि दृर्यश्वहृधी-

पिबासोमद्वितीयायांसहोदैर्घे मरायेस्वाद्ययोः स्यं-
तमामराये विद्वान्मरायवैराजर्षभयो स्त्वामि-
दूभूरिहितायां मराये सहोदैर्घे त्वभ्यासो नद्यो-
रौर्णायवयोः परिप्रियायां मार्गीयवे च त्वंह्वेत्ये-
तौ शब्दौ सौपर्णे पवित्रमत्स्येज्ञीये नकिष्टुरित्सिते
ऽसाव्यंशुः सर्वत्र न सन्तानिनि पाव्योः क्रोशे

---

इतिर्यंशब्दः संकृष्टः *मरायेस्वाद्ययोः* मराये पिबासोमाद्ययोर्हर्य
इतिर्यंशब्दः संकृष्टः यन्ते सुखावहर्येति येन वृत्राणीति च संकृष्टः
*स्यन्तमामराये* मरायेषु श्रुधीहवायाया, कृष्णदुतास्यन्तमेति
मराये स्यशब्दः संकृष्टः *विद्वान्मरायवैराजर्षभयोः* अ-
सुर्यस्य विद्वानिति मराये वैराजर्षभयोर्विद्वानिति द्वाशब्दः संकृष्टः
*त्वामिद्भूरिहितायां मराये* भूरिहितायां मराये भूरिमनी-
षीहवतेत्वामिदितित्वाशब्दः संकृष्टः *सहोदैर्घे त्वभ्यासः*
सहोदैर्घे श्रुधीहवान्त्वाया हवेत्वामिति अभ्यासविषये त्वा-
शब्दः संकृष्यते *नद्योरौर्णायवयोः परिप्रियायां*
परिप्रियायां और्णायवयोर्वयाऽसिनद्योरितिद्योशब्दः स-
कृष्टः *मार्गीयवे च* मार्गीयवे नद्योशब्दः संकृष्टः *त्व-
ह्वेत्येतौ शब्दौ सौपर्णे* स्वारसौपर्णे त्वह्वयदेव्येतित्वश-
ब्दोह्वशब्दश्च संकृष्टौ *पवित्रमत्स्ये ज्ञीये* यज्ञायज्ञीये सोमः
पवित्रमत्स्येतिरेभन्निति मत्सेशब्दः संकृष्टः *नकिष्टुरित्सिते* आसिते
इत्यभिन्द्रमध्यमायां नकिष्टद्रथीतर इति ष्टुशब्दः संकृष्टः *असाव्य
ंशुः सर्वत्र* असाव्यंशुर्मदायेतिव्यशब्दः सर्वसामसु संकृष्टः *न-
सन्तानिनि* सन्तानिनि निकृष्टः *पाव्योः क्रोशे* माणाशिशु-
र्मध्यमायां पाव्यो इति व्योशब्दः उपान्तिमस्य पाव्योरिति

प्यैरयत्रैतक्रोशवार्शेषु स्वर्ण्यरित्वंघां च गवाष्टेडु-
सिमासु त्वं घांशुद्धीये सुहस्त्यरन्ध्रोत्तरवरुणगोष्ठा-
र्कपुष्पेषु स्वानः परिस्वानायां वैदन्वतहाविष्मतरेव-
तीष्वेष एव शब्दोऽक्रान्त्वासिष्ठे परीताध्यास्यायां
चानवमे ऽहनि स्वंकाविर्द्वितीये दन्वते मित्राः स्वा

---

क्रोशे संक्रष्टः *प्यैरयत्रैतक्रोशवार्शेषु* प्राणाशिषुर-
स्यायां पृष्ठप्यैरयद्रायिमिति पृष्ठप्यैशब्दस्त्रेताद्दिषु संक्रष्टः *त्वर्-
रित्वंघांचगवाष्टेडासिमासु* त्वांरिहन्ति त्वंघांचेति त्वचशब्दो
आधीगवाष्टेडसिमासु संक्रष्टो *त्वंघाशुद्धीये* शुद्धाशुद्धीये
त्वंघाचेति त्वंशब्दः संक्रष्टः *सुहस्तपरन्ध्रोत्तरवरुणगोष्ठार्क-
पुष्पेषु* स्वारमौक्ष्णोरन्ध्रवरुणसाम्नगोष्ठअर्कमेष एतेषु सा-
मसु । मृज्यमानः सुहस्त्येति स्त्यशब्दः संक्रष्टः
*स्वानः परिस्वानायां वैदन्वतहाविष्मतरेवतीषु* प-
रिस्वानोगिरिष्ठा इति स्वाशब्दः संक्रष्टः वैदन्वतहाविष्मत-
रेवतीषु एतेषु सामसु परिस्वा इति स्वाशब्दः संक्रष्टः
*एषएवशब्दोऽक्रान्त्वासिष्ठे* अक्रान्तसमुद्रायां वासिष्ठे वृह-
त्सोमो वावृधे स्वानो अद्रिभिरिति स्वाशब्दः संक्रष्टः *प-
रीताध्यास्यायां च* श्रीणन्त इयत्र परिस्वानश्चक्षस इति-
स्वाशब्दः संक्रष्टः सर्वसामसु *अनवमे हनि* श्रीणन्त इति
नवमेऽहनि वासिष्ठे परिस्वानक्षस इति संक्रष्टः स्वाशब्दः
*स्वंकाविर्द्वितीये दन्वते* वैदन्वते ऊहसमाम्नाये क्रमाद्द्वितीये
वैदन्वते स्वंकाविरिति स्वंशब्दः संक्रष्टः *मित्राः स्वानाः
सर्वत्र* सोमाः पवन्तायां मित्राः स्वाना इति सर्वसामसु

नाः सर्वत्र दध्याशिरोचिते ब्यद्रिभिर्यज्ञीये त्वं मातौपगवे वरेण्यं पराध्यं चातीषङ्गे ऽत्योगभस्त्योः स्वः शब्दश्च ज्ञीये स्वःकावाभिक्रन्दयो रत्योर्के सोगभस्त्योः ष्वाविशे त्येते शब्दास्त्रयः शार्ङ्गे क्रुश्चयोनुमाघोत्योगभस्त्योः स्वष्वाविशेत्येतेशब्दाः षडेषडे ॥ १२ ॥

इति षष्ठः प्रपाठकः समाप्तः ॥

---

संक्रुष्टः *दध्याशिरोचिते* ( समामोदध्याशिरइति ) गौरीविते सोमाः पवन्तमध्यमायां दध्या इति ध्याशब्दः संक्रुष्टः *ब्यद्रिभिर्यज्ञीये* सुष्वाणासोब्यद्रिभिरिति यज्ञायज्ञीये संक्रुष्टः *त्वंमातौपगवे* औपगवे त्वंमाताशतक्रतोइति त्वशब्दः संक्रुष्टः *वरेण्यं पराध्यं चातीषङ्गे* अतीषङ्गे यन्मन्यसेवरेण्यं यच्चेदिक्षुपराध्यमिति च संक्रुष्टौ *अत्योगभस्त्योः स्वशब्दश्च ज्ञीये* यज्ञायज्ञीये हरिः सृजानो अत्योशूरोनधत्तआयुध्यगभस्त्योः स्वःसिषासन्निति च संक्रुष्टाः *स्वःकावाभिक्रन्दयोः* स्वःसिषासन्निति स्वःशब्दः कावे वायोरभिक्रन्दे च संक्रुष्टः *अत्योर्के* हरिःसृजानो अत्योदीर्घतमसोर्के सशब्दः संक्रुष्टः *अत्योगभस्त्योः ष्वाविशेत्येतेशब्दास्त्रयःशार्ङ्गे* अत्योगभस्त्योः ष्वाविश इत्येते शब्दाः संक्रुष्टास्त्रयः शार्ङ्गे *क्रुश्चोनुमाघोत्योगभस्त्योः स्वःष्वाविशेत्येतेशब्दाः षडेडे* एते शब्दाः षडेडे संक्रुष्टाः ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये द्वितीयस्य द्वादशी कण्डिका समाप्ता ।

इति द्वितीयः प्रपाठकः समाप्तः ॥

सप्तमः प्रपाठकः ।

देवेभ्यः संक्षारे नर्यः परीतायां माधुयास्थभी-शरीरदंष्ट्रजभानुप्रयौधद्वैगणरतरस्थानसंकृतिभर्गय-शाथर्वणतरेषु नवमेत्वाहनि सर्वत्र दैर्घवर्जं विभा-षारुणसाम्न्येष एव शब्दः संक्रुष्टो गोमन्नप्कले स्वे-ष्ठ्यव्यद्ध्यालोशे तमसोर्केचा ऽत्रैव तृतीयायाम-न्त्यः सर्वत्र न्योजसाकीर्त्ये भ्यं कीर्त्ये काशीतहाविः

*देवेभ्यः संसारे* इडानाधंसक्षारे हिन्वन्ति सूराद्वि-तीयायां भ्यः शब्दः सकुष्टः *नर्यः परीतायां माधुया-स्य भीशरीरदष्ट्रजम्भानुपयोधद्वैगणरतरस्थानसकृतिभर्गयशाथर्व-णतरेषु* दधन्वाश्योनर्य इति माधुछन्दसादिषु ऐड-यास्य आभीशवरौरवदंष्ट्राचरवार्थजम्भआरूपयौधाजयद्वैगतक-णरथन्तरदेवस्थानसकृतिभर्गयशावर्वणरथन्तरेषु सकुष्टः *न-वमेत्वाहनि सर्वत्र* नवमेऽहनि पृष्ठ्कौत्सलादिषु नर्य इति संक्रुष्टः *दैर्घवर्ज्ज* दैर्घश्रवसे तु विक्रुष्टा-नर्यः शब्दः । *विभाषाऽरुणसाम्नि* । परीतायामेव वरु-णसाम्नि नर्यः शब्दोविभाष्यते नर्यः शब्दोविकल्प्यते संक्रु-ष्टोविक्रुष्टो वा *एष एव शब्दः संक्रुष्टोगोमन्नप्कले* एष एव शब्दोगोमन्न इत्यत्रसमोहरीणा संक्रुष्टः *स्वेष्यव्यद्ध्या-लोशे* असारिसोमायां ध्यम्यालोशे पुनानोवारमन्येषाव्यवे-तेशब्दास्त्रयः संक्रुष्टाः *तमसोऽर्के च* दीर्घतमसोर्के च एते त्रयः शब्दाः संक्रुष्टाः । *अत्रैव तृतीयायामन्त्यः सर्वत्र* अस्मिन्नेवासाविसोमतृचे कविर्वेध्यथामत्यपोनमृज्य इति स्यश-ब्दः सर्वसामसु सकुष्टः *न्योजसाकीर्त्ये* महादिवाकीर्त्य-श्रायन्तायां वसुनि जातोजनिमान्योजसा इति न्योशब्दः सं-

ष्कृतयोः स्वꣳशब्दः सर्वासु त्वांदेवासोरित्याप-
इत्येतौ शब्दौ वैश्वमनसश्रुध्ययो रर्चत्युद्वꣳशीयवित-
योः सान्वारुहोवꣳशीये भुर्यवꣳशीयलेयावितेषु प-
र्यूष्वान्धीगवसꣳस्तोभयो स्तरध्यैविते राज्येन्धीग-
वदेव्ययोः सनित्यः सर्वत्राऽत्रैव तृतीयायां त्वा-
ꣳशदेव्ये त्पृण्वन्दक्षाप्य इत्येतौ शब्दौ मरायेशे-

---

क्रुष्टः *भर्ग्यकीर्त्ये* महादिवाकीर्त्ये एव वण्महाँ२असीत्यत्र वि-
भ्राजोतिरहाभ्यमिति भ्यं शब्दः संक्रुष्टः *काशीतमहाविष्कृत-
योस्त्वꣳशब्दः सर्वासु* त्वꣳसोमासिधारयुरितित्वं शब्दः स-
र्वासु स्तोत्रीयासु संक्रुष्टः *त्वान्देवासोरित्याप इत्येतौ शब्दौ
वैश्वमनसश्रुध्ययोः *यत्रत्वदेव इत्यत्र त्वान्देवा इति त्वाशब्दः
संक्रुष्टः श्रुधिधाव इत्यत्र त्याशब्दः संक्रुष्टः *अर्चत्युद्व-
ꣳशीयवितयोः* अर्च त्यर्कंमर्क्षणइति उद्वꣳशीयगौरीवित-
योः त्यशब्दः संक्रुष्टः *सान्वारुहोवꣳशीये* गायन्तित्वा-
यमेव यत्सानोः सान्वारुह इति उद्वꣳशीये त्वाशब्दः संक्रु-
ष्टः *भुर्यवꣳशीयलेयावितेषु* उद्वꣳशीयकालेयगौरीवितेषु भु-
र्यस्पष्टेतिर्यशब्दः संक्रुष्टः *पर्यूष्वान्धीगवसꣳस्तोभयोः* प-
र्युषुप्रधन्वेति र्यूशब्दः संक्रुष्टः *तरध्यैविते* गौरीवितेद्विपस्तरध्यै
इति ध्यैशब्दः संक्रुष्टः *राज्येन्धीगवदेव्ययोः* आन्धीगववा-
मदेव्ययोः महेमस्यराज्य इति ज्यसब्दः संक्रुष्टः *स नित्यः
सर्वत्र* अग्निनर इति द्वितीयायां दक्षाप्योयोदमआसनित्य
इति नित्यशब्दः सर्वासामसु संक्रुष्टः *अत्रैव तृतीयाया त्वꣳ-
शदेव्ये* अग्निनरद्वितीयायां मेद्धोअग्नायाꣳत्वाꣳशश्वंतइति
वामदेव्ये त्वां शब्दः संक्रुष्टः । त्पृण्वन्दक्षाप्य इत्येतौ शब्दौ

घ्याभारद्वाजे व्यस्थिरन्पाडिडे ऽवंत्यस्यस्वारङ्कावङ्गा-
यो स्त्वमिन्द्ररंवृत्राणीन्द्रस्य यशासि त्वंवृहदं
स्येत्येतौ शब्दौ द्विर्हिकादेव्ये यत्त्वंऽस्यन्येयशासि-
हृंऽस्यभीवर्त्ते प्वपितोलौशो त्वंऽसुवीरः इयेन व्य-
शब्द. शिशुन्देव्यज्योतिषयोः पुत्रेभ्योभारद्वाजे प्र-

---

मराये *अग्निनरायामेव तमग्निमस्तेवसवीन्द्रणवनूदक्षास्यइति
घृशब्दघशब्दौ सङ्क्रष्टौ *मराये येयाभारद्वाजे* स्वा-
दु भारद्वाजे हरीमपूरशेप्येति प्याशब्दः सङ्क्रष्टः *व्यस्थिरन्
पांडिडे *पवित्रतायां पांडिडे अर्वन्तो अस्यतन्नवाव्यस्थिरान्-
निष्पशब्दः संकृष्टः । *अवन्त्यस्यस्वारकावङ्गीययोः* प-
वित्रन्तायां अवन्त्यस्य पवितारमिति स्वारकावयज्ञायज्ञीययो-
स्त्यशब्दः संकृष्टः *त्वमिन्द्रत्वत्वराणीन्द्रस्य यशासि* त्वमिन्द्र-
यशा असीत्यत्र इन्द्रस्य यशासि त्वमिन्द्रस्त्वत्वराणीतिच त्वं
शब्दौ सङ्क्रष्टौ *त्ववृहस्येत्येतौ शब्दौ द्विर्हिकादेव्ये* अ-
त्रैव द्विर्हिकारे वामदेव्ये त्वहत्राणि हन्त्स्येतित्वंशब्दस्यशब्दौ
सङ्क्रष्टौ *त्वस्यन्येयशासि त्वमिन्द्रयशाअसीत्यत्रैव यशासित्वट-
त्राणिहस्स्य मतीत्येकदृतित्वशब्दस्य शब्दन्येशब्दाः संक्र-
ष्टाः* हस्स्यभीवर्ते *अत्रैवाभीवर्ते त्वटत्राणिहस्स्येति श-
ब्दः सङ्क्रष्ट* प्वापितोलौशे । *गोविसवस्त्रेतिद्वाभ्यालौशे
भुवनेष्वर्पित इति प्वशब्दः संक्रष्टः* त्वंस्सुवीरश्येने *गो-
विच्छरेने त्वंसुवीरो अमीतित्वं शब्दः सङ्क्रष्टः* व्येशब्दः
शिशुदेव्यज्योतिषयोः *शिशुजज्ञानमिति वामदेव्यदैवज्यो-
तिषयोः कविर्गीर्भिः काव्ये इति व्येशब्दः सङ्क्रष्ट.* पुत्रे-
भ्यो भारद्वाजे *इन्द्रक्रतायां भारद्वाजे पुत्रेभ्य इति *प-

स्यशब्दो नानदरथन्तरयोर्युज्याविशीये श्रतान्यस्य श्यैत-
वाजीययोः पूर्व्यमुत्सेधे स्पृकभिः पार्श्वे हरिण्यास-
तास्येभिर्वसासु ॥ १ ॥

त्वेसोमाभ्यभिर्हीत्येतौ शब्दौ दैर्घे घ्न्यानांश्रुध्ये
पृणध्वंकण्वतरे जातमार्यज्ञीये पाह्युत्वामिचरौरवे छ-

---

शब्दः संक्रुष्टः *स्यशब्दो नानदरथन्तरयोः* प्रत्यस्मैपिपीषतायां
नानदरथन्तरयोः स्यशब्दः संक्रुष्टः *युज्याविशीये* आनोवि-
श्वाया सद्दोविशीये तुविशुष्मस्य युज्येति ज्याशब्दः संक्रुष्टः
*श्रतान्यस्य श्यैतवाजीययोः* स्वादोरित्थाया श्यैतवाजी-
ययोः श्रतान्यस्य सश्चिरे इतिन्यस्यशब्दौ संक्रुष्टौ *पूर्व्य-
मुत्सेधे* प्रत्नंपीयूषायामुत्सेधे प्रत्नंपीयूषं पूर्व्यमिति व्यशब्दः
संक्रुष्टः *स्पृकभिः पार्श्वे* अपारुत्वाया गायत्रपार्श्वे वि-
श्वापदूतायरियास्पृकभिरितिस्पृशब्दः संक्रुष्टः *हरिण्यासप्ता-
स्येभिर्वसासु* अपारुत्वायामेव निसवत्मासु अपारुत्वाहरि-
ण्यासप्तास्येभिरिति च ण्याशब्दस्येशब्दौ संक्रुष्टौ* ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
प्रथमा कण्डिका समाप्ता ॥ ० ॥

*त्वेसोमाभ्यभिहीत्येतौ शब्दौ दैर्घे* त्वेसोमप्रथमाव्रुक्त-
र्हिपइति दैर्घश्रवसे त्वेशब्दभ्यशब्दौ संक्रुष्टौ *घ्न्यानांश्रुध्ये*
नदंवोअदतीनामितिघ्न्याशब्दः संक्रुष्टः *पृणध्वंकण्वतरे* क
ण्वरथन्तरे देवोवाया पृणध्वमिति ध्वशब्दः संक्रुष्टः *जा-
तमार्यज्ञीये* यज्ञायज्ञीये अदर्शिगातुवित्तमाया उतोपुजातमपा
र्यइति र्यशब्दः संक्रुष्टः *पाह्युत्वामिचरौरवे* पाहिनो

ग्निभिश्चरंत्पस्तावे नैये दुर्यत्युयता चान्धीगवे न्यैर-
यज्ञीये· स्वान्दृतज्ञीये शाग्ध्युहारमानवयो स्तवपंश्लोहि·
जम्भे स्वंपुरुकौत्समजम्भयोः मत्ययकीर्त्ये यः का·
लेये पूर्याः संजये वीर्यस्यपण्यस्यवारे श्रुधीहवायां मा·

---

अग्नायी पाशुनेतिशुशब्दः संक्रुष्टः त्वामिद्धिर्हवामहे इति च
त्वाशब्दः *अग्निभिश्चरन्त्यस्तावे नैये* नैपातिथे अग्नआयाह्य-
ग्निभिरिति स्तुचश्चरंत्यध्वर इति च अत्र प्रस्तावविषये ग्नत-
ध्वरपशब्दौ संक्रुष्टौ *दुर्यत्युयता चांधीगवे* आंधीगवे त्रि-
शो त्रिशो यो अतिथिमित्यत्र दुर्य इति यशब्दः प्रथमायां
संक्रुष्टः तृतीयायां यो देववात्युयतेतित्युशब्दायशब्दश्च सं·
क्रुष्टौ *न्यैरयज्ञीये* अत्रैव यज्ञायज्ञीये हव्यान्यैरयदिति
न्यैशब्दः संक्रुष्टः *त्वान्दृतं ज्ञीये* समिद्धमग्निंमिति यज्ञायज्ञीये·
त्वांदृतमिति त्वां शब्दः संक्रुष्टः *शाग्ध्यूहारमानवयोः* शाग्ध्यु·
षिवतिहारायणे पूर्वमानवयोः शाग्ध्यूशब्दः संक्रुष्टः *स्तवश्लोहिज
म्भे* स्तश्लोहस्तेस्त इतिवार्कजम्भे स्तंशब्दश्लशब्दौ संक्रुष्टौ, *स्वं·
पुरुकौत्समजम्भयोः* अत्रैव कौत्सवार्हिषवार्कजम्भयोस्त्वंपुरुसह·
स्राणीति स्वंशब्दः संक्रुष्टः *मत्ययकीर्त्ये* महादिवाकीर्त्ये
इन्द्रमिद्देवतातय इत्यत्र इन्द्रमयस्यध्वरइति त्यशब्दः संक्रुष्टः
*अर्यः कालेये* यस्यायंविश्व आर्य इति कालेयेऽर्यशब्दः
संक्रुष्टः *पूर्याः संजये* संजये उतो न उत्सुपूर्या इति यों·
शब्दः संक्रुष्टः *वीर्यस्यपण्यस्यवारे श्रुधीहवायाम* श्रुधीह-
वायां वारवन्तीये सुवीर्यस्य गोतम इतिर्यशब्दः संक्रुष्टः
पुरुण्यस्येति पण्यशब्दः *माधे पृष्ठे* पिबाश्रुतायां पृष्ठे
आपिर्नोबोधिसधमाद्य इतिद्यशब्दः संक्रुष्टः *सत्ययेश्रुध्यत्रेतयोः*

घेपृष्ठे सख्येशुध्यत्रैतयोस्त्युमाः पूर्वैष्वनड्वत्वेक्रतुमि
त्येतेशब्दाः इषैते पार्येहर्यशब्दश्च देव्ये वाधृधेन्यश्च-
देव्ये सत्राच्यानाकिष्ठ्वायोपस्त्याचवाशे सर्ँसद्यत्वेदे-
वादन्त्यात्पान्तृश्मस्यमन्ते त्वमङ्गककुभे व्युपाः कावे
महत्स्वासंतनिनि वीरसेन्यः संतनिहद्रिरयो रो-

---

गोमन्त इन्द्रायाश्शुःपत्रैतयोः सखेत्रसख्ये इतिसख्येशब्दः
संक्रुष्टः *स्त्यूमाः पूर्वं ष्वनड्वत्वे क्रतुमित्येतेशब्दाः इषैते*
तद्दिदासावा इषैते अनूयं विश्वेमदंत्यूमा अष्वनश्वष्वनश्वमष्व-
त्वशब्दौ स्वेक्रतुमिति स्वेशब्दः एते शब्दाः संक्रुष्टाः *पा-
र्येहर्यशब्दश्च देव्ये* मघवत्पर्येशब्दतनमणीतीहर्यशब्दः सं-
क्रुष्टः इति वर्त्तते *वाधृधेन्यं च देव्ये* एदुमधोर्मदिन्तर-
मिति वामदेव्ये यज्ञेभिर्वावृधेन्यामिति न्यशब्दः संक्रुष्टः
*सत्राच्यानाकिष्ट्वायोपस्त्याचवाशे* उभयश्शृणव ईवेदमुत-
योर्वाशे सत्राच्येति च्याशब्दः नाकिष्ट्वामुनशनिष्ठ्वाशब्दः यो-
पस्त्यागमादिति स्त्याशब्दः एते शब्दाः संक्रुष्टाः *संसद्यत्वे दे-
वाद्न्त्यान्सन्तृश्मस्य मन्ते* इमंस्तोममर्हन्तेम श्मघमेधशब्दः
स्वेदेवाहविरदन्त्साहुतमितित्वेशब्दस्त्याशब्दौ त्वमाद्दिसानितित्या-
शब्दः न्तुशब्दः स्मशब्दः षडेते शब्दाः संक्रुष्टाः समन्ते *त्व-
मङ्गककुभे* श्रैककुभे त्वमङ्गप्रशंसिषइति त्वंशब्दः संक्रुष्टः
*व्युपाः कावे* अबोध्यग्निर्ज्म उदेतीति कावे व्युशब्दः संक्रुष्टः *म-
हत्स्वासन्तनिनि* इन्द्रोमदायां सन्तानिनि स्वामिन्महत्स्वजीपुनि-
तस्त्वाशब्दः संक्रुष्टः *वीरसेन्यः सन्तनिहद्रिरयोः* इन्द्रोमदायापेव
सन्तनिवाद्द्रिरयोः अभिहिवीरसेन्य इति न्यशब्दः संक्रुष्टः *ओ-
षधीभ्योङ्गीये* उपास्मैगीये शश्राजभ्योषधीभ्य इति भ्य-

पर्धीभ्योऽपि मत्स्यबृहति दधेवार्याणिकमश्वे स्वर्णज्योतिरुत्तरे कमश्वे स्वशब्दएनाश्रुध्ये ऽदश्यांबृहद्रथंतरयो र्वैहारस्त्वंश्रुध्ये वृष्णावपट्कारणिधने काव्यंनाभ्यासे स्वांवृत्रेष्विंद्रगामदस्त्रमित्येते शब्दास्त्रयोवारे स्वामित्वांकाष्ठासु प्रतिहारे बृहति स्वांपं-

---

शब्दः संकृष्टः *मत्स्यबृहति* । मत्स्यपारितायां बृहति मत्स्यशब्दः संकृष्टः *दधे वार्याणिमु कमश्वे* अग्न ऽस्महोतायां सामकमश्वे विश्वादधे वार्याणीति णिशब्दः संकृष्टः *स्वर्णज्योतिरुत्तरे कमश्वे* अग्नेतमद्यायां साकमश्व एव भवानो अर्वाङ्स्वर्णज्योतिरितिस्वशब्दः संकृष्टः *स्वशब्द एनाश्रुध्ये* एनाऽग्निश्रुध्ये स्वध्वरमिति स्वशब्दः संकृष्टः *अदश्यांबृहद्रथन्तरयोः* । मत्सुमदश्यांयनीति बृहद्रथन्तरयोः श्याशब्दः संकृष्टः *वैहारस्त्वंश्रुध्ये* अग्ने विवस्वदुषस इति श्रुध्ये जातवेदो वहा त्वमिति त्वं शब्दः संकृष्टः *वृष्णावषट्कारणिधने* विधुं दद्राणायां ऐमिद्दे वृष्णेति ष्णाशब्दः संकृष्टः *काव्यं नाभ्यासे* अहिन्मित्व वृते वषट्कारणिधने देवस्य पश्य काव्यमिति व्यंशब्दः संकृष्टः अनभ्यासविषये, अभ्यासे तु विकृष्ट एव पूर्वमभ्यस्तं परोऽभ्यास इति वचनात् *स्वां वृत्रेष्विन्द्रगामदस्त्रमित्येते शब्दास्त्रयोवारे* त्वामिद्धि हवामहे इति वारवन्तीये स्वां वृत्रेष्विति त्वांशब्दः वृत्रेष्विति ष्विशब्दः गामदस्त्रमिति स्त्रंशब्द एते शब्दाः संकृष्टाः *त्वामित्वा काष्ठासु प्रतिहारे बृहति* त्वामिध्यामेव बृहति त्वामिद्धीति त्वां शब्दः त्वा काष्ठास्विति त्वांशब्दः प्रतिहारविषये संकृष्टः न प्रस्तावे *स्वांपत्तांद*

ससाहे ण्विन्द्रबृहन्नरे त्वाऽँशब्दौ पूर्वौण्विन्द्रस्त्वजंभे जनिव्यश्येने वीयैंदेव्यवृहतो रत्रैवकाम्यंदेव्ये सख्ये-स्फिग्यं च रथंतरे यामेव्यख्य स्त्वोवारथंतरे ॥ २ ॥

अयिष्कारस्य भैस्वरे मत्यये ग्रहणौविसर्गलोपः

त्वामिध्याबेत्र ससाहे व्यपस्त्वांशब्दाः संक्रष्टाः *ण्विन्द्रबृहत्तरे* त्वामिध्यामेव बृहद्रथन्तरे त्वांहत्रेण्विन्द्रेगिण्विशब्दः संकृष्टः *त्वा-ऽँशब्दौपूर्वौण्विन्द्रस्त्वजंभे* । त्वामिध्यामेव वार्कजंभे त्वाऽँश-ब्दौपूर्वौत्वामिद्धित्वात्वेत्रेण्विति ण्विशब्दः एते शब्दाः संक्रष्टाः *जनिनिव्रश्येने*अरण्ये गेये श्येने देवीजनिव्य इ-त्यत्र व्यशब्दः संकृष्टः *वीयैंदेव्यवृहतोः* त्रिकद्रुकायां पञ्चनिधने वामदेव्यबृहतोः *सार्कंद्दोवीगीरितियैंशब्दः सं-कृष्टः *अत्रैव काम्यं देव्ये* । त्रिकद्रुकायामेव ञ्चनिधने वामदेव्ये दातारायस्तुवने काम्यमिति म्यशब्दः संकृष्टः *सख्येस्फिग्यं च रथन्तरे* माभेममाश्रमिश्मेतिरथंतरे उग्रस्य सख्ये तव इति ख्येशब्दः । सव्यामनुस्फिग्यं इति ग्यंशब्दः संकृष्टौ *यामे व्यख्यत* । यामे व्यख्यन्माहिप इति व्य-ख्यशब्दौ संकृष्टौ *स्त्वोवा रथन्तरे* कयानायां रथंतरे स्त्वो-शब्दः संकृष्टः । सामिकं उदाहरणं नार्चिकम् । तेन वाशब्दो न विकल्पार्थः ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य द्वितीया कण्डिका समाप्ता ॥ ० ॥

आयित्वादयोभावा विकृष्टाश्चतुर्दशानुक्रान्ताः क्रमप्राप्तं लोपालोपलक्षणं तदुच्यते *आयिष्कारस्य भै स्वरे मत्यये ग्रहणौविसर्गलोपः* आइःकारस्तोभे स्वरे मत्यये ग्रहणौवि-

स्थाभिर्यस्ते सुरूपे वयतिरभिद्युम्नतृतीयायां याचः साम्नि भिः स्वासु विशीये श्रुचिः परिप्रियायां मार्गीयवे गविः प्रसोमदायां कण्वतरे सुनिः पिबास्वस्याभिनिधनकाण्व नृभिर्द्ददिरिंद्रोमदायां वार्हद्गिररश्मयोर्नैरीःस्वासु रश्मे गिरेर्वृष्णि ज्यो-

---

सर्जनीयलोपः प्रहर्षैरितिवाचद्रूहपामित्यर्थः । नैतत्समाप्यान्यं लक्षणम् । किन्तर्हि वक्ष्यमाणेषूदाहरणेषु लोपः । अतः परं तान्युदाहरणानि *स्थाभिर्यस्ते सुरूपे* पूर्वे सुरूपे यस्ते मदायां सूपस्थाभिरिति विसर्जनीयलोपः *वयतिरभिद्युम्नतृतीयायां* याचः साम्नि* नियावाहिनेविश्यतिरिति आयिःकारस्य विसर्जनीयलोपः *भिःस्वासु विशीये* स्वासु विशाविशीये स्तुषेश्रुतस्य मन्माभिः सपर्यन्तीति प्रशस्तिभिः इति च भिः शब्दे विसर्जनीयलोपः *शुचिः परिप्रियायां मार्गीयवे* परिप्रियायां ईनिधने मार्गीयवे समुद्रमुपातिराशुचिरिति चिःशब्दे विसर्जनीयलोपः *गविः प्रसोमदायांकण्वतरे* प्रसोमदायां कण्वरथन्तरे नजाशुर्गविरिति विःशब्दे विसर्जनीयलोपः *सुनिः पिबास्वस्याभिनिधने काण्वे* । अभिनिधने आश्वासस्यसमाधानमिति मासुतोनरिति परिष्कृतस्यरसि इयमासुतिरिति तिःशब्दे विसर्जनीयलोपः *नृभिर्द्ददिरिन्द्रोमदायां वार्हद्गिररश्मयोः* । नृभिर्द्ददिः इन्द्रोमदायां वार्हद्गिरपार्थुरश्मयोः शतसेन्द्रस्य नृभिः, अभिभूतिरपापद्दिरिति च भिः शब्दे दिः शब्दे च विसर्जनीयलोपः *नैरीः स्वासु रश्मे* स्वासु पार्थुरश्मे या इन्द्रेण सयावरीरिति रीःशब्दे आयिःकारे विसर्जनीयलोपः *गिरेर्वृष्णि* वृष्णिसाम्नि अभिप्रवायां गिरेरिवेति रेःशब्दे आ-

तिस्तावे प्रत्युबृहति सोमस्यातिर्हेप्रत्यये सहस्रधारा-
यां स्वाष्ट्रीसाम्नोः स्वरप्रथमे चारिष्टे चानादा व-
द्रिरभ्यासे प्रत्यये क्कायां वैश्वज्योतिषवात्सप्रार्केषु
नकि नकिष्ठद्रथार्पस्वशब्दे प्रत्यये गौरीश्वितासि-
तयोः ॥ ३ ॥

---

पिः कारे विसर्जनीयलोपः #ज्योतिस्तावे प्रत्युबृहति# प्रत्यु-
अदर्शापती बृहतिज्योतिष्कृणोतीति प्रस्तावविषये तिः शब्दे
विसर्जनीयलोपः #सोमस्य तिर्हे प्रत्यये सहस्रधारायां स्वाष्ट्रीसा-
म्नोः# स्वारयोस्त्वाष्ट्रीसाम्नोः सहस्रधारायां सोमस्यातिरिति
तिः शब्दे विसर्जनीयलोपः #स्वरप्रथमे च# पदूनायोः स्व-
राणां प्रथमे स्वरे सहस्रधारायामेव हेशब्दे प्रत्यये विसर्जनीय-
लोपः #अरिष्टे चानादौ# सहस्रधारायामेवारिष्टे अनादावभ्यासे
प्रत्यये । किमुक्तं भवति यनीरायायिणामिति प्राप्ते आद्यस्य नका-
रस्य लोपः । तस्मिन् लुप्ते आदिवर्जित इकारो ऽभ्यस्त इत-
नादिरभ्यासः । यथा इन्वे राजानां अभिभीतिरास्मिन्ननादावभ्या-
सेप्रत्यये इकारेतिशब्दे विसर्जनीयलोपः #आद्रिरभ्यासे प्रत्यये-
ऽक्कायां वैश्वज्योतिषवात्सप्रार्केषु# । अक्कायां वैश्वज्योतिषवा-
त्सप्रार्केषु । अक्कायां ज्योतिषवात्सप्रदीर्घतमसोर्केषु बृहद्भोपो-
वाद्येषे स्थानेआद्रीभवि अभ्यासप्रत्यये द्रिःशब्दे आपिःकार-
स्य विसर्जनीयलोपः । #नकिर्नकिष्ठद्रथायां स्वशब्दे प्रत्यये
गौरीविताससितयोः# । नकिष्टद्रथायां नकिः स्वश्चोति किःशब्दे
विसर्जनीयलोपः स्वशब्दे प्रत्यये ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
तृतीया कण्डिका समाप्ता ॥ ० ॥

उःकारस्यौहोत्रायां प्रत्यये ग्रहणैर्विसर्गलोपः पृथुः सांवर्ते क्रतुः परीताध्यास्यायामायास्ये त्रीणि त्रितायां पार्श्वे परिमितायां च मार्गीयवे क्रतुरिं- द्रक्रतुमित्यत्र पुम्भद्रवैतानिश्रेष्ठ दुर्देर्णायां वासिष्ठे रहस्ये च योधावृहति वाजयुः सदोवनायामन्त- रिक्षे सजूरग्नेवृहति विसर्जनीयकारोजीराः सैधुः

---

*उःकारस्यौहोत्रायां प्रत्यये ग्रहणे विसर्गलोपः* । उःका- रविसर्जनीयस्य औहोत्रायां प्रत्ययस्य पूर्वलक्षणेषूदाहरणेषु विसर्जनीयलोपः । अतः परमुदाहरणानि वक्ष्यन्ते । *पृथुः सांवर्ते* पंद्रनायां सांवर्ते गिरिर्नैमिश्वतः पृथुरिति थुःशब्दे उःकारस्य विसर्जनीयलोपः *क्रतुः परीताध्यास्यायामायास्ये* । त्रिणिधनायास्ये श्रीणंनायां क्रतुरिति तुः शब्दे विसर्जनी- यलोपः *त्रीणित्रितायां पार्श्वे* त्रीणि त्रितायां त्रिधु- क्रतुरिति तुः शब्दे तुःकारविसर्जनीयलोपः *परिमितायां च मार्गीयवे* परिमितायां च इलिपने मार्गीयवे स्वानैर्वातिकवि- क्रतुरिति तुः शब्दे विसर्जनीयलोपः *क्रतुरिन्द्रक्रतुमित्यत्र पुं- भद्रवैतनिश्रेषु* । इंद्रक्रत्वायामहावैष्टंभद्वैतपूर्वजानिश्रेषु मासिवा- सोअत्क्रतुरितिपुःशब्दे विसर्जनीयलोपः *इंदुर्दर्णायां वा- सिष्ठे* । वर्णायां उद्गायेत्रामिष्ठे इंदुर्हिन्वान इंदुःशब्दे उःकार- विसर्जनीयलोपः *रहस्ये च योधा वृहति* रहस्ये च योधारयां वृहति द्विर्द्विः पदपञ्चस्येन तस्मिन् इंदुरश्च इति दुःशब्दे विसर्ज- नीयलोपः *वाजयुः सदोवनायामन्तरिक्षे* । अन्तरिक्षे सदो- वनायां पिदांत्मसिर्नवाजयुरिति युःशब्दे विसर्जनीयलोपः *स- जूरग्नेवृहति* अग्नेविश्वस्थायां वृहति सजूर्देवेभ्यामित जूः

क्षिते निकामाविनशृङ्गयो उर्याकाः प्रोषु वत्सास्व-
कारोगोमन्नः श्रुध्ये समुद्रः प्रथमस्वरइमाउत्वायाऽं-
श्यैननौधसयोः स्वःशब्दः पूर्वः पूर्वे यौक्ते स्वशब्दश्चै
वातिहारमाप्तोलोपः क्रियते सिष्ठत्रैशोकयोश्च यौक्ते

---

शब्दे विसर्जनीयलोपः *विसर्जनीयाकारौ जीराः सैंधुक्षिते* पवमानस्य जिघ्रत इति सैंधुक्षिते जीरा अजिरेतिविसर्जनीयाकारौ लुप्येते *निकामाविनशृंगयोः* आजागृतायां गौरीवितगौशृंगयोः सपंतियं मिथुनासोनिकामा इति विसर्जनीयाकारयोर्लोपः *उपाकाः प्रोषु वत्सासु* प्रोष्वस्मा इति नियत्र-स्तासु उपाकाअधीतिविसर्जनीयश्च अकारश्च विसर्जनीयाकारौ लुप्येते *अःकारोगोमंनः श्रुध्ये* गोमंनायां श्रुध्येनः शब्दे अकारसहितो विसर्जनीयोलुप्यते नराएवं स्थिते अस्वरस्य नकारस्य परगमनं इकारे नकारोगतः निएवं स्थिते तालव्यत्वद्वात्वादपि भावः । ततः गोमंनाइदोएतद्रूपं भवति *समुद्रः प्रथमस्वरइमाउत्वायां श्यैतनौधसयोः* समुद्रइव प... इति यथा समुद्रशब्दः प्रथमस्वरमाप्तो भवति तथा द्रव शब्दे अःकारलोपः । अत्रापि पूर्वपदेन रूपसिद्धिः *स्वःशब्दः पूर्वः पूर्वे यौक्ते* द्रुपापर्वायां पूर्वे योक्तास्ते पवमानस्वर्द्दशमिति पूर्वस्य स्वशब्दस्य अकारलोपः । अभ्यस्ताभ्यासापेक्षया पूर्वशब्दः अत्रापि रूपसिद्धिः पूर्ववत् *स्वःशब्दश्चैवातिहारमाप्तोलोपः क्रियते सिष्ठत्रैशोकयोः* समन्द्रादिदमुच्यते स्वःशब्दविसर्जनीयलोपः मक्षुन इति अतः स्वशब्दविसर्जनीयस्यैव अतिहारमासस्य लोप उपादिश्यते । वक्ष्यति हि पुरस्तात् । स्वः सर्वत्र यथा स्वर्विदसंक्रुनिमादीये च विः

पोत्तरे ण्वोर्मरायेऽभ्यासे प्रत्यये विसर्जनी चा-
लोपमेके विरामे ॥ ४ ॥

---

स्वशब्दविसर्जनीयलोपः प्राप्तः स्तोभव्यवहितत्वात्सर्वत्रातिदिश्य-
ते। यथा—किमुदाहरणं पवस्वमधुमत्तमायां अस्यपीत्वास्वर्विद इति
शाकुनिसादीययोः स्वः शब्दे विसर्जनीयस्य रेफीभूतस्यातिहारः
*स्वर्विदा नामेधे* अत्रापि इंद्रवाहास्वर्विदानामेधे इंद्रवाहास्व-
र्विदेति स्वः शब्दे विसर्जनीयलोपः रेफीभूतस्यातिहारः। एषउत्स-
र्गः वस्वे प्रत्यये। अयमपवादः उत्तरे यौक्काश्वे स्वः शब्दे
विसर्जनीयलोपः। स्वः शब्दः परोनातिहुते पवादः पवमान
स्वर्दृशमिति। सुवा ३३२ सुवा ३१६ ३ शामितिमात्रेप्रतिषेधः
औतहारस्य *सिष्ठुत्रैशोकयोश्च* यर्चापा वासिष्ठु स्व.सिन्दसम्भिति
स्वःशब्दे विसर्जनीयस्यातिहारमात्रस्य लोपः *त्रैशोके च स्वासु*
स्वःपतिर्यदीवृधइति स्वः शब्दे विसर्जनीयस्यातिहारमात्रस्य
लोपः। प्रासङ्गिकमुक्तम्। प्रकृतमेवेदानीं वर्णयिष्यामः। स्वःशब्दे
विसर्जनीयस्य लोपः प्रकृतः। तयोस्तदेव व्याख्यातं। सिष्ठुत्रैशो-
कयोश्चेति *यौक्के चोत्तरे* एतदपि व्याख्यातम् नस्वेप्रत्ययइति
*ण्वोर्मरायेऽभ्यासे प्रत्यये* अग्निमरायां मरण्वोः शब्दे वि-
सर्जनीयलोपः। *अभ्यासे प्रत्यये* लुप्यते ण्वोः शब्दे एवप्रत्ययः
*विसर्जनीयस्यचालोपमेकेविरामे* अग्निमरायामेव मराये एके
आचार्या विसर्जनीयस्य अलोपं मन्यंते। विरामेण्वोः ण्वोण्वो
इत्येव। अथवा विसर्जनीयस्य एके अलोपं मन्यन्ते अविरामे
सन्धावपि विकल्प इत्यर्थः यथासंख्युचेकइति। अत्रादिष्टसंधिः
संधिर्वाभवतीतिएवंविहापिविकल्पः। प्रथानलोपः लोपोचेति ॥४॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य च-
तुर्थी कण्डिका समाप्ता ॥ ० ॥

तेंत्यंवचनः संक्रातिनि स्तोभाद्यं वचनं प्रतिस्तोत्रीय मुद्भिद्वलभिदौ पूर्वस्यादौ परस्यांते भर्गस्य सामादौ स्तोभांत्यं पदं वैराजऋषभेत्यन्त्यस्यांत्यवचनं यद्-वापत्ययोर्यथा ग्रामे वैराजइत्यादिः स्तोत्रीयान्ते सर्वासु स्तोत्रीयाद्ये चाक्षरेमत्स्वसंयुक्ते ॥ ९ ॥

---

सामान्तेंत्यंवचनं* एतेषां साम्ना सामान्ते यन्निरुक्तं तस्य अन्त्यं पद्वचनं तद् लुप्यते *संक्रातिनि स्तोभाद्यं वचनं प्रतिस्तोत्रीयम्* संक्रातिनि, उद्गीथाद्यस्य निरुक्तस्य प्रतिस्तोत्रीयमाद्यं वचनं लुप्यते *उद्भिद्वलभिदोः पूर्वस्यादौपरस्यान्ते* , उद्भिः द्वलभिदोः पवनेद्वयं तयस्तोमद्वयोः, पूर्वस्य उद्भिदः, यत् सामादौ, च निरुक्तं तस्यानुद्धारः परस्य च वलभिदः अंते, यन्निरुक्तं तस्यानुद्धारः *भर्गस्य सामादौ, स्तो-भान्त्यं पदं* भर्गस्य ये स्तोभास्तेषां पदान्त्ये पदान्तस्तोभान्तं पदं सामादौ भवति *वैराजर्षभे त्वन्त्यस्यांत्यवचनं* वैराजर्षभे तु अन्त्यस्य निरुक्तस्य अन्त्यवचनं सामादौ भवति ईगा २ हा उ-पिबासोमादिषु *यद्वापत्ययोर्यथाग्रामे* यौ एवापत्ययोः अर्वा-सोमायां यथा ग्रामेगेयानामुक्तोन्त्यागः ॥ भवति स्तोभश्च सामाद्यः सामान्ते यथान्यायमिति *वैराजइत्यादिस्तोत्रीयान्ते , सर्वासु* महावैराजे इत्यादिस्तोभः स्तोत्रीयान्ते सर्वासु स्तोत्रीयासु भवति *स्तोत्रीयाद्ये चाक्षरेमत्व स्वसंयुक्ते*एकैकस्याश्चस्तोत्रीयायाः आद्ये अक्षरे ते च स्तोत्रीयाया अन्ते मत्वस्वसंयुक्ते भवतः ॥

इति अष्टमस्य नवमी कण्डिका ॥

आज्यदोहानि प्रतिलोमानि तेषामाद्यस्य सामादाचार्यं वचनम् आथर्वणदेवस्थानस्वरान्तरिक्षतौरश्रवसानामविकारः सर्वोद्धारोतोन्यत्र वैरूपे तु देवतानामनुद्धारः प्रयोगसिध्यर्थमि हाथेडानां चैकवृपे च देवतानां निधनन्तु सामान्ते सर्वत्र यल्लघीयो ।

---

*आज्यदोहानि प्रतिलोमानि* आज्यदोहाना सामाम्नायिक क्रममुत्सृज्य प्रातिलोम्य भवति इतिश्रुतेः अपामवर्चोनिधनमिति आज्यदोहाना लोकगोवानियोग इति *तेषामाद्यस्य सामादावाद्यं वचन* तेषा प्रातिलोमाना पदाद्यमृतनिधनं तस्य सामाद्यावाद्य वचन भवतिच्योश्हामिति प्रद्युम्नानायां *आथर्वणदेवस्थानस्वरान्तरिक्षतौरश्रवसानामविकारः* आथर्वणादीना ऊहगतौ यथायोनि प्रयोगो भवति न कश्चिद्विकारः आथर्वणे पव स्वदक्षमादिषु देवस्थाने परीतोष्यादिषु स्वरेषु सर्वेष्वत्र जातिघचनात् । यज्ञामप्रन्नानादिषु अन्तरिक्षे अभिसोमादिषु तौरश्रवसयोः प्रत्नघसखायोदीर्घापीने *सर्वोद्धाराऽतोन्यत्र* अतोन्यत्र सर्वस्तोभोद्धारः *वैरूपे तु देवतानामनुद्धारः प्रयोगासिध्यर्थम* पञ्च निधने वैरूपे देवतानामनुद्धारः प्रयोगसिद्धयर्थं देवतापद । देवतापदामिति पूर्वलक्षणेन सर्वोद्धारे प्राप्ते अपवादस्तोभाभिप्रायेण *इहाथेडानाच* इहअथाइडाएतेषां चानुद्धारः प्रयोगसिद्धयर्थं रेवतीपार्थुरश्मादिषु हाउवेवाए२वादोः २ ओ २३४२३वा *एकवृषे च देवताना* एकवृषे च अभिमवा एकवृषसोमे स्वद्वोइत्यादियादेवताना अनुद्धारः शाकर्यमेव सामान्यात् *निधनंचसामान्ते सर्वत्र यल्लघीयः* अनुद्धारप्रसङ्गेनैवमुच्यते । सामान्ते यन्निधन लघु अल्पाक्षरमित्यर्थः । यथा

गुरुषु निधनैकदेशः त्रिरुक्तानामन्त्यं वचनमृषभे त्रिरुक्तं देवस्थानपूर्वयोर्निधनाद्यं पदमन्त्यायाᳪं सर्वं दिवाकीर्त्ये वैराजं भ्राड्विकर्णे द्वास्वरम्भासे शतमादि-यशसि ससहेत्वाधवचनᳪं साम्नोः पूर्वस्योपग्रहा-द्यंपदमपाव्रतेच गवांव्रते चकत्वान्तं प्रथममद्विनोर्व्रत-

बृहद्रथंतरयोः स्वाशिरामर्कादिषु च *गुरुषु निधनैकदेशः* गुरुषु च वक्षरेषु निधनैकदेशः यथोत्तरत्र वक्ष्यति *त्रिरुक्ताना-मन्त्यंवचनं* त्रिरुक्तानां निधनानामन्त्यं वचनं । यथा आज्यदोहे प्रीणिधने * ऋषभेतु त्रिरुक्तं* रैवतऋषभे तु त्रिरुक्तमेव निधनं भवति नान्त्य वचनं उमउमइति योनित्रिधनम् । *देवस्था नपूर्वयोर्निधनाद्यंपदं* देवस्थानपूर्वयोः स्तोत्रीययोः निधनस्य आद्यं पदं भवति द्यौः *अन्त्यायाᳪंसर्वं* देवस्थानपूर्वयोर्निध-नाद्यं पदं अन्त्यायां स्तोत्रीयायां सर्वं भवति *दिवाकीर्त्ये वैराज* महादिवाकीर्त्ये आपन्नीयायां गणगोतित्वात् वैराजं भवति इका-रोवैराजइत्यनेननिधनं *भ्राड्विकर्णे* विकर्णे आपन्त्यायामेव भ्राड्निधनं भवति फाडाया उपरि स्थयअन्यानिधनं भ्राड् भवति *द्वास्वरंभासे * भासे पुरोजित्यंत्यायां भास्वरं निधनं भवति । मसभ्राजतृतीयेद्वास्वरः इहो होभद्रमयवमादिपरित्य अस्य निधनं भासमवतिभाद् ॥ *शतमादियशसि* हाऊ २ यशो हाऊवर्चोहा-ऊएवमादि परित्यज्य शतं जीवेत्येवमादि निधनं भवति *ससहेत्वा-धवचनं *ससहे तु त्रिरुक्तस्य आद्यं निधनं भवति अन्तवचने. मास इदमुच्यते यांश्चरतंषष्ठम । *साम्नोः पूर्वस्योपग्रहाद्यं पदमपां व्रते च गवां व्रते चकत्वान्तं प्रथमम् *प्रथमे अपांव्रते च पुनानायांव्रते कशब्दान्तं पदमथमंतत्रिधनं भवति यअग्निरते शिशुकइति गवांव्रते च. शब्दान्त प्रथमं निधनं भवति । *अश्विनोर्व्रतपूर्वइका-

पूर्वं ईकारोऽतिक्रान्तो वैरूपशाक्वरर्षभपूर्वयोरर्द्धेडा सामान्तेऽध्यर्द्धा ऽश्वव्रते हौ हो हौ हो हौ होन्तेषु चत्वारः सोमा वा औहोवा तिसृवा स्वर्ज्योतिः प्रथमोच्चमेकारादिक्रुष्टमेवं पदाद्यस्तोभाः. परासु विधासु ज्योतिर्भाः

---

रोऽतिक्रान्तः* अग्निनोऽग्निपूर्वं इकारोऽतिक्रान्तो निधनोभवति*२१२ वैरूपशाक्वरर्षभपूर्वयोरर्द्धेडा* पञ्चनिधनैरूपशाक्वरर्षभपूर्वयोः स्तोत्रीययोः अर्द्धेडा भवति न जातपञ्चरोदसीइट् *सामान्तेऽध्यर्द्धा* सामान्तेतु अन्त्यायां स्तोत्रीयायां अध्यर्द्धेडा भवति इट् इडा ३२१११ इति अध्यर्द्धेडा *अश्वव्रते हो हो हो हो होन्तेषु चत्वारः सोमा* अश्वव्रते तु होहोहोहोइति एतेषु होइकारान्तेष्वित्यर्थः । तेषु चत्वारः सोमाः स्वराः सङ्घाता भवन्ति सोमसङ्घातः प्रपुनानायेवेधसइति प्रथमे साम्नि होइ होइसोमायवृवाउच्चारताइति *वा- औहोवा तिसृवा* औहोवा त्रित्ये तिसृवा वा भवति तिसृवा पूर्वमत्ययत्वाच्च होशब्दस्य वृद्धिः *स्वर्ज्योतिः प्रथमोच्चमेकारादिक्रुष्टम्* तिसृवायाः परं स्वर्ज्योतिर्द्रव्यं प्रथमोच्चं भवति उपायपरत्वाद्धा प्रथमोच्चं युद्दस्य प्रथमोच्चस्य निधनभावः अन्तस्थेभ्यः पुराहासीगप्रमोच्चानीति निधनत्वाच स्वारः निधनान्तः सर्वत इति । तस्य च स्वर्ज्योतिर्द्रव्यस्य निधनभूतस्य एकारः आदौ क्रुष्टोभवति ए२२ सुवर्ज्योती ३२३२ *एवं पदाद्यस्तोभाः* एवं होहोइ एवमाद्याः स्तोभाः प्राक्प्रथमोच्चात् सिवाद् स्वरान्तान्भवन्ति अभिवाजीसितस्य आदौ भवन्ति एषा तावदेका विधा समाप्ता *परासु विधासु ज्योतिर्भाः शिशुर्वाऽध्यत्रोमेध्य इति* परासु विधासु किमतिदिश्यते ? पादादौ स्तोभान् कृत्वा प्रथमोच्चस्य स्थाने द्वितीयायां विधायां ज्योतिर्भा इति । तृतीयायां शिशुर्वाजीति । चतुर्थ्यां प्रथमोच्चस्य

शिशुर्वाञ्जघ्नयोमेध्य इति पादगीतिस्तुल्या परयोरुद्धारः सामान्ते निधनाय स्तोभाः स्वर्वत इति निधनमुपग्रहादि व्याहृतिसामानि पञ्च भूर्भुवः । स्वः सत्यपुरुष इत्येतासु पृथगग्निन्दूनास्तावोमन्द्रे सो-

---

स्थाने अश्रोमेध्य इति *पादगीतिस्तुल्या* यथा प्रथमा पादगीतिः पठिता पादादौ स्तोभाः प्रथमोच्च यथोक्तम् एवमन्याश्चतस्रो विधा भवन्ति *परयोरुद्धारः* परयोः स्तोत्रीययोः स्तोभः प्रथमोच्चान्तादुद्धारः *सामान्ते निधनाय स्तोभाः *अन्ते निधनं स्वर्वत इति तदर्थं च स्तोभाः कर्त्तव्याः प्रथमोच्चवर्जिताः *स्वर्वत इति निधनमुपग्रहादि* स्वर्वत इति निधनमुपग्रहादिभिर्भवेव एकार उपग्रहः *व्याहृतिसामानि पञ्च भूर्भुवः स्वः सत्यं पुरुष इत्येतासु पृथक्* भूरादिव्याहृतिषु पञ्च सामानि यथोपदिष्टानि भवन्ति । यथा भवति तथोच्यते एकैकस्यां व्याहृत्यां अभ्यस्तायां त्रिस्त्रिः पञ्च सामानि भवन्ति *अग्निदूता प्रस्तावोमन्द्रे* भू शब्दे आग्नन्दूताख्यः प्रस्तावो भवति मन्द्रग्रहणाच्चाग्निन्दूतायामभ्युदूह *सोमस्त्रिरुक्तः* भूरादिष्वेव एकैकस्यामनभ्यस्तायामग्निन्दूता प्रस्तावोभवति इत्युक्त, इदानीं परा भक्तय उच्यन्ते पुनर्भूरित्येतस्मिन्नक्षरे सोमसङ्घातस्त्रयस्त्रिरुक्तोभवति सोमसङ्घातश्च पृथक् भवति *आनीकपान्तृतीय.* सोमसन्धात आनीकया तृतीय मापद्यते हा ३३२ वाइति *स्वर्ज्योतिर्निधनमकृष्टैकारादि* भूरादीना मकृतव्याहृतिसामान्ते स्वर्ज्योतिर्द्रव्य प्रथमोच्च भवति प्रथमोच्चत्वाद्य निधनमुपाययस्त्वात् नैधनत्वाच्चान्ते स्वरः एकारः स्वरश्चास्याक्षर मकृष्ट आदौ भवति प्रथमोच्चये । *एव सर्वेषामेव विकारविधिः*

मन्त्रिरुक्त "आनीकयांतृतीयः स्वर्ज्योतिर्निधनमकृष्टे· काराश्चैवं सर्वेषामेष विकारविधि रेतेन प्रदेशेनोह्यः सामगणः कल्पयितव्यः कल्पयितव्यः ॥ १० ॥

इत्यष्टमः प्रपाठकः ॥

अथ विकल्पा स्वज्योतिर्मदमदोधनकामे पुरः स्वासूत्तरयोश्चारङ्क्मानदे ऽष्टेडरपिष्टयोर्हिन्वनादीवि-

---

एवं सर्वेषामामहीयवादीना साम्नां एष विकारविधिरुक्तः प्रत्येतव्यः । *एतेन प्रदेशेनोह्यः सामगणः कल्पयितव्यः कल्पयितव्यः* एतेन लक्षणप्रदेशेन ऊह्यः प्रयोगः कल्पयितव्यः कल्पयितुं शक्यत इति ॥

इति अष्टमस्य दशमी कण्डिका ।

इति उपाध्यायाजातशत्रुपादैर्विकुपशाशिष्याय अनुचरणार्थं भाष्यं कृतमिति ॥

भावाः परिसमाप्ताः इदानीं विकल्पा उच्यन्ते भावशेषं च, एकस्मिन् पादे द्विधा गीतिर्दृश्यते, तत्र किमुभयप्रकारस्यापि गानस्य युगपत्प्रयोगो भवति । उतान्यतरस्येति संशयः । प्रयोगार्थत्वाद्ग्रन्थस्य, तन्निर्णयार्थमिदमारभ्यते *अथविकल्पाः*, वक्ष्यन्त इति वाक्यशेषः । *स्वर्ज्योतिः* तरणिरित्सिषासां रौरवे· नेमिन्तष्टेवसा ३ उहा ३३३ ईति विकल्पेनान्यतरस्य प्रयोगः *मदमदोधनकामे* पवस्वइन्द्रसायां, निधनकामे मदहो इमदा होइमतिस्तोत्रीयमन्यतरस्य प्रयोगो भवति । *पुरःस्वासूत्तरयोश्चारङ्क्मानदे* पुरोजितीं नामदे स्वासु चोत्तरयोः स्तोत्रीययोः अरङ्क्मा विकल्प्यते अरङ्क्मापजइत्येतत । *अष्टेडरपिष्टयोर्हिन्वनादीविहिन्वराः* पवस्ववाजसातयतृतीयायां अष्टेडरपिष्टयोः

द्विस्वरा मातापृद्धं॰इवामित्रे कौध्यमपष्ठनवमात्रं दीर्घपरयोर्दोपापरश्चीचै गेयतृतीयदशमं कृष्टं॰ सर्वे-त्र धर्मविधर्मणोः पञ्चाक्षरशोधनानि स्तावे हविष उत्तरयोः प्रथमे विराड्पर्यूच देव्येगीथस्तदादि नवे-निहोता तिधातुधारा , त्वेसोदैर्घे गकारः. शनेराजन्त्र-

---

पवमानमहित्वनेति द्वीदिद्विस्वरा' गीतिविकल्प्यते *मातार-द्वं॰ इवामित्रे* असाविसोम इन्द्रतृतीयायां पञ्चायज्ञीयर्ष्ठु'तृती-'यायां'च महावैश्वामित्रे माशब्दताशब्दयोर्यदूर्द्ध्वं गानं तं-द्विकल्पते । यज्ञंचमाउतत्रातादिति च *कौध्यमपष्ठ नवमात्रम्* गायत्रीकौश्चे 'मतिस्तोत्रीयं मध्यमे' पादे 'षष्ठमक्षरं विकल्प-ते *दीर्घे परयोर्दोषा' परं नीचैः* -लघुदीर्घे परयोः' दोपायाः परमक्षरं नीचीभवति *गवतृतीयदशमंकृष्ट४ सर्वत्र* गौगवे तृतीये पादे दशमं कृष्यते *धर्म्मीविधर्म्मणोः' पचाक्षरशोधनानि* पंचाक्षरदाः- निधनानि भवन्ति दशाक्षराणि विकल्पेनाम्नानानि *स्तावे'हविष उत्तरयोः' प्रथमे* सौहविष'उत्तरयोः स्तोत्री-ययोः प्रस्तावे प्रथमे स्वरे विकल्पः परि प्रधन्वोत्तरयोः पवा-प ३ वा आईत्वा २ इन्द्रः पे २ आ ३ इन्द्रा २ *विराड्पर्यू च' देव्ये 'गीथस्तदादि* ओग्निर्न्नरः इति पर्युष्वायां' च वा-मदेव्ये उद्गीथाद्यं पर्वं प्रथमे स्वरोविकल्पते *नवे निहोता* पूर्वे 'मानवे' निहोता विकल्पते' 'अभिसोमादिषु *तिधातु-तुधारा* मन्द्रयापेत्यत्र धारा विकल्पते । *त्वेसोदैर्घे* गकारः त्वेसोमायां दैर्घश्रवसे हगोहेतिगकारोविकल्पते *शनेराज-न्पुवते* इद्धोराजन्नौशने राजन् शब्दोविकल्पेन'-पुवते ।

यत आसोफतृतीयायामृतेनयोनिवन्मध्येजाप्लुतं प्रा-न्त्ययोर्यलोपश्चाद्यउच्चैस्तकारो यजिवाह इहायांप्लु-षते यशस्युत्तरयोरग्निदूतास्तावे एववृहत्युदा आ इति गीतिः यभेकाम्या स्वंनोवारे पुनाएववृहति मसोएवत-रेपुनाभिसोजंभेचोत्तरयोः ककुभोर्विकल्पाः ॥ १ ॥

---

*आसोफतृतीयायामृतेनयोनिवन्मध्येजाप्लुतं प्रान्त्ययोर्यलोप-श्चाद्यः उच्चैस्तकारः* आसोफतृतीयाया सफेऋतेन इति एत-स्मिन्पादे वाशब्दः योनिवद्भवति मध्यमे विकल्पे प्रथमान्त्ययो-र्विकल्पयोः जाशब्द एव प्लुतो भवति यकारलोपश्च तयोरेव आ-द्ये विकल्पे उच्चैस्तकारः *यजिवाहइहायाप्लवते* यजिष्ठंत्वाया-मैष्णवाहे इहायां मध्यमे प्लवते *यशस्युत्तरयोरग्निदूतास्तावे* इन्द्रस्य यशासि उत्तरयोः स्तोत्रीययोः मस्तावे अग्निदूता वि-कल्पते *कएववृहत्युदाआइतिगतिः* त्वमङ्गप्रशंसिषोदेवः शविष्ठ मर्त्यमित्यस्याम्* कएववृहति उदाआइन्द्रीत गीतिर्विकल्पते *यभेकाम्या* श्रुधीहवा-या वैराजर्षभे मारेअस्मन्मघवञ्चित्यत्र काम्यास्वरोविकल्पते *स्वं-नोवारे पुनाएववृहति मसोएवतरे पुनाभिसोजभेचोत्तरयोः क-कुभोर्विकल्पाः* स्वंनश्चित्रायां वारवंतीये, पुनानायां कण्व-वृहति मसोमदेवरीतयाया कण्वरथंतरेषु पुनानायामभिसोयायां च वार्कजंभे च उत्तरयोः स्तोत्रीययोः ककुभोर्विकल्पाः ककु-भोवृहत्यौ वा ॥

इति पुष्पसूत्रभाष्ये नवमस्य प्रथमा कण्डिका ॥

॥

अथ भावान्प्रवक्ष्यामः प्रगाणं यैर्विधीयते ।
आर्थिकं स्तौभिकं चैव पदं विक्रियते तु यैः ॥१॥
आयित्वं प्रकृतिं चैव वृद्धञ्चावृद्धमेव च ।
गतागतश्च स्तोभानामुच्चनीचं तथैव च ॥ २ ॥
सन्धिवत्पदवद्गानमत्वमाभावमेव च ।
प्रश्लेषाश्चाथ विश्लेषाऊहे त्वेवं निबोधत ॥ ३ ॥
संकृष्टश्च विकृष्टश्च व्यञ्जनं लुप्तमविकृतम् ।
आभावांश्च विकारांश्च भावानूहेऽभिलक्षयेत्॥४॥
एतैर्भावैस्तु गायन्ति सर्वाः शाखाः पृथक्पृथक् ।
पञ्चस्वेव तु गायन्ति भूयिष्ठानि स्वरेषु तु ॥ ५ ॥

---

*अथ भावान्प्रवक्ष्यामः* अथशब्द आनन्तर्यार्थे भावान् प्रवक्ष्यामः *प्रगाणं यैर्विधीयते* । गानमेव प्रगाणं विधीयते प्रतिष्ठाप्यन्त इत्यर्थः ॥

*आर्थिकं स्तौभिकं चैव पदं विक्रियते तु यैः* ॥ १ ॥ आर्थिकं पदं स्तौभिकं च विक्रियते । यैर्विकारैरापद्यन्ते तान्प्रवक्ष्यामः

*आयित्वं प्रकृतिं चैव वृद्धं चावृद्धमेव च ।
गतागतं च स्तोभानामुच्चनीचं तथैव च ॥ २
संधिवत्पदवद्गानमत्वमाभावमेव च ।
प्रश्लेषाश्चाथ विश्लेषा ऊहे त्वेव निबोधत ॥ ३ ॥
संकृष्टं च विकृष्टं च व्यञ्जनं लुप्तमविकृतम् ।
आभावांश्च विकारांश्च भावानूहेऽभिलक्षयेत् ॥ ४ ॥
एतैर्भावैस्तु गायन्ति सर्वाः शाखाः पृथक्पृथक् ।
पञ्चस्वेव तु गायन्ति भूयिष्ठानि स्वरेषु तु ॥ ५ ॥

सामानि पट्सु चान्यानि सप्तसु द्वे तु कौथुमाः ।
ऊनानामन्यथागीतिः पादानामधिकाश्च ये ॥ ६ ॥
योनिदृष्टाः समा येऽन्ये पादास्त्वक्षरशः समाः ।
आयेभावश्च नेदानीं दीर्घं यथैव कृष्यते ॥ ७ ॥
कर्षणे तु निवर्त्तेते रसायिघायामुपद्रवे ।
ओभावोदृश्यतेसाम्न्योभावश्च यथाक्रमम् ॥ ८ ॥

---

*सामानि पट्सु चान्यानि* पट्सु गीयंतेप्रथमादिष्वेव । *सप्तसु द्वे तु कौथुमाः* सप्तसु स्वरेषु द्वेसामनी गीयेते कौथुमशाखिनां मोपुत्वावाकाव्रन ॥

*ऊनानामन्यथा गीतिः पादानामधिकाश्च ये* ॥६॥ योनिपरिमाणादूनानां पदानां अक्षरपरिमाणादूनानामित्यर्थः । पादानामन्यथा गीतिर्भवति । यथाएष ब्रह्मादिषु । योनिपरिमाणादधिकाश्च ये तेषां चान्यथा गीतिर्भवति । यथा विराड्वामदेव्यादिषु ।

*योनिदृष्टाः समा येऽन्ये पादास्त्वक्षरशः स्मृताः* ।

पादास्तु येऽन्येऽक्षरसमानतः समाः स्मृताः ते योनिवद् दृष्टा भवन्ति॥

*आयेभावश्चनेदानीं दीर्घं यथैव कृष्यते*आयेभावो नभवत्यूहगीतौ श्यैतादिषु । दीर्घकर्षणं च न भवति । किं तर्हि ? हृद्धकर्षणं भवति यथा आर्कोदनानामित्यत्र ॥

*कर्षणे तु निवर्त्तेते रसायिघायामुपद्रवे* ।

रसायिनायां मध्ये उपद्रवे भक्तिविषये कर्षणे उद्देशोऽपि निवर्त्तते ऊहगीतौ समेष्वपि पादेषु ।

*ओभावोदृश्यते साम्न्योभावश्च यथाक्रमम्* । ओभावोदृश्यते साम्नि यत्र ओभावश्च दृश्यते । यथाक्रमं लक्षणन्यायेन य-

अभ्युदूहेन सर्वत्रोहगीती रहस्यवत् ।
स्वादिपर्वणि तिस्रायां तथैवान्येषु सामसु ॥ ९ ॥
आर्चिकं निधनन्याये स्तौभिकं वा यदक्षरम् ।
क्रुष्टाक्रुष्टं भवेत्स्वार्यमन्तोदात्तं वृधे स्वरम् ॥१०॥
मणाजनंसदघोनामाविशासिविदेप्सुजित् ।
स्वन्नायुयुंशियेतिभिरपि प्रियमभिहिता ॥ ११ ॥
जसाचसन्तमधर्मत्सुत उक्थ पिबिर्द्धयन् ।
न्यायादेतान्यपेतानि भवत एके वृधे स्वरम् ॥१२॥
अभिासपौष्कलाष्टेडरयिष्ठाछिद्रधर्मसु ।
चैनाम्वद्मनपौरुकान्धीचतुः षाडिडयोस्तथा ॥ १३ ॥

---

यावथा मात्रिः तयोस्तयातथा तौ भवतः । ऊहगीतावपि ।

*अभ्युदूहेन सर्वत्र उहगीती रहस्यवत्* । अभ्युदूहेन सर्वत्र ऊहगीतिः मत्येतव्यः । यथा रहस्ये तद्वत् ॥

*स्वादिपर्वणि तिस्रायां तथैवान्येषु सामसु ।

*यथा स्वादिपर्वणि तिस्रायां अभ्युदूहो भवति । रहस्यवता तथाऽन्येष्वपि सामसु यथा सहिते । उदाहरणं त्विस्रावाचउवा।

आर्चिकं निधनं न्याये स्तौभिकं वा यदक्षरम् ।

क्रुष्टाक्रुष्टं भवेत् स्वार्यमन्तोदात्तं वृधे स्वरम् ।

*आर्चिकं निधनं यत्र स्तौभिकं वा तयोर्यदन्त्यमक्षरं तत् क्रुष्टमक्रुष्टं वा भवेत् । स्वार्यं प्रथमस्वरस्य क्रुष्टं स्वार्यं भवति । प्रथमाद्यतृतीयस्वरान्ते चेति । द्वितीयस्वरस्यस्य अक्रुष्टं भवति । तृतीयादिपत्युत्क्रमं कृत्वा अन्तोदात्तं वृद्धे स्वरं भवति । कुतः? न्याये योनिगाने योनावेवं दृष्टत्वात् । *मणाजनंसदघोनामाविशासि विदे [illegible] स्वन्नायुयुनंशियेति-

अभ्यान्धीगवयोस्तोभगमांच्छिद्रेयुपश्च सु ॥ २ ॥

तृतीयोच्चान्त्य४ हि स्तोभे दीर्घो भवति न वाग्रे स्पर्शान्तं व्यञ्च कौत्से चेकारोकारौ नञ्चाध्वर्यवमध्यमायां५ सन इन्द्राणां श्रौद्रेच कृतेचापदान्तोविशीयेच पूर्वेशूप श्रिणिधने चायास्ये सेधेपिणोदनः का-

---

*तृतीयोचान्त्य* हि स्तोभे दीर्घो भवति *तृतीयोचान्त्य*मक्षरं ह्रस्वं इकारे स्तोभे मत्यये दीर्घोभवति । द्विमात्र भवतीत्यर्थः । यथापेडक्रौंचराग्राादिषु *नवाग्रे स्पर्शान्तं व्यंच* उत्सर्गमात्रस्यापवादः । वाग्रे स्पर्शान्तमक्षरं तालव्यं च न दीर्घोभवति यथा राजादेवकृत अदब्धः मुरभि च *कौत्से चेकारोकारौ* कौत्से च इकारउकारौ हि स्तोभे मत्ययेन दीर्घोभवतः यथा स्वादीहिष्ठासमूहिमीहति *नञ्च* कौत्से नशब्दश्चा दीर्घोभवति । सनाहीन्द्रेति *अध्वर्यवमध्यमायां* अध्वर्यौ आद्रिभिरीतमार्गीयवमध्यमाया हि स्तोभे मत्यये दीर्घोभवति यथाहा अहोयिमा ३ ना ३ *सन इन्द्राणाम्* सनइन्द्रेति मार्गीयवे हि स्तोभे मत्यये दीर्घोभवति, यथा अहोयिवो ३ वीन । *श्रौद्रे च* सौद्रे च मार्गीयवे रसौ होवेत्यत्र हि स्तोभेभवति । *कृते चापदान्तः* हाविष्कृते च अपदान्तो दीर्घो भवति हिस्तोभे मत्यये स्वादिरयादिषु *विशीये च पूर्वेशूप* विशोविशीये च पूर्वे हि स्तोभे मत्यये दीर्घोभवति अपदान्तः । हिन्वद्रुतायिसु अशूप स्तुपेशूप इत्यत्र मतिषेधः *त्रिणिधने चायास्ये* त्रिणिधने चायास्ये स्तोभे मत्यये दीर्घोभवति । अपदान्तएव । उत्सोदेवोहिराहाउहोवा *उत्सेधेपिणोदनः* उत्सेधे पिणोदनइति च एतौ शब्दौ हिस्तोभमत्यये दीर्घोभवतः । अग्निसोमायां श्रीमन्ते

मे च प्रथमकल्पे सौमे स्तावे कार्त्ते च पार्श्विनोर्वितोत्तरे शंकुन्येकार ऋषभे च शाकरे संमील्ये लघुविनते ऽन्त्ये कालेये प्रवामहीयवे च क्रौञ्चाभिनिधनसप्तहपथ उत्तरपत्तोद्धिन्नासदस्यपेपुर्तृण्यादिर्जितेश्चे पूर्वेऽसंयोगे प्रयो-

---

इत्यत्र *कामे च प्रथमकल्पे* सर्वासु पवस्तादायां निधनकामे प्रथमे विकल्पे दीर्घीभवति हिस्तोभे प्रत्यये सर्वासु स्तोत्रीयासु *सौमेस्तावे* सौमेधे प्रस्तावे दीर्घीभवति । हि स्तोभे प्रत्यये योगेयोगेतवाहाउस्ता २ र। २ *कार्त्ते च पारि*कार्त्तयशे च पारिस्वस्यानो अक्षर इत्यत्र हि स्तोभे प्रत्यये दीर्घीभवति *अश्विनोर्घ्रतोत्तरे* उत्तरे अश्विनोर्घ्रते हि स्तोभे प्रत्यये दीर्घीभवति, *शंकुन्येकारे* शंकुनि च एकारे प्रत्यये दीर्घीभवति। पवस्वमापधुमा *ऋषभे ■ शाकरे* शाकरपभे च एकारे प्रत्यये दीर्घीभवति पवाएस्व वा एजसाएनयआ *समील्येलघुविनते* संमील्ये लध्वक्षरं विनते प्रत्यये दीर्घीभवतिसंमील्येपुरोजितीत्यत्र *अन्तेकालेये*कालेय अन्तभावविषये अक्षरे प्रत्यये दीर्घी भवति । कालेयमस्यायं विश्नाअर्याः *प्रवामहीयवे च* प्रत्नंपीयूषेत्यत्र आमहीयवे अन्तभावविषये एव प्रत्यये दीर्घीभवति । दिवाअनार्याः *क्रौञ्चाभिनिधनसप्तहपथउत्तरपत्तोद्धिन्नासदस्यवेपुर्तृण्यादिः* एतेषां तृणादिदीर्घीभवति । क्रौञ्चे अयंपूषो हो २ रयिर्भगाः । आमन्देरभिनिधने । पुनानः सोमसप्तदे । पयस्युत्तरयोः तृणीमहात्रोदाहरणम् । पत्तोद्धान्ते । पुरोजित्यां त्रासदस्यवे, तत्रोदाहरणं *जितोश्चपूर्वेऽसंयोगे* पूर्वं वाजजिति तृण्यादि दीर्घीभवति । असंयोगे प्रत्यये मृज्यमानायां पवमानः प्रयादेवाना सोमेत्यत्र दीर्घीभावत्रतिषेधः *उत्तरे-

त्तरेस्तोभे क्रौंचेत्वसयोगे नात्राविनेभिः कौत्से च हि शब्दः प्रवद्गार्गेवे कृष्टादस्थादकारः स्वारे च पर्णे हारा- योनौ त्वङ्गप्रथमायां च द्वितीयस्मन्तः सन्तः पञ्ज- निधेरथन्तरनृपाश्विनोर्वेतप्वोस्तोभे दैर्घे व्रात्योत्तर-

---

स्तोभे* उत्तरे वाजजिति स्तोभे प्रत्यये षोडशीमहातस्याआ- दिर्दीर्घोभवति । सूर्यस्येवारश्मयोडावयिजावाः ३ होवाहोयि *क्रौंचे त्वसंयोगे* क्रौञ्चेषु असंयोगे प्रत्यये दीर्घोभवति । सं- योगःप्रतिषिध्यते । यथासूरामोनौहोदर्शताताः *नात्राविनेभिः* अत्राविनेभिरेवामित्यत्र प्रतिषेधः । असंयोगेऽपि प्रत्यये *कौ- त्से च हिशब्दः* कौत्से चाहि शब्दोदीर्घोभवति असंयोगे प्रत्य- ये । अभीहोनो २ *प्रवद्गार्गेवेकृष्टादस्थादकारः* प्रवद्गार्गेवेकृ- ष्टादस्थादकारो दीर्घो भवति शुचि वन्धुपावकाः *स्वारे च पर्णे हारायोनौ* स्वारे च सौपर्णे प्रतिहारात्परमक्षरं दीर्घो भवति, द्वितीयस्संतयोनौ । अस्ताहाउवा रामा उ वा रामा इति *त्वङ्गप्रतिमाया च* प्रतिहारात्परमक्षरं दीर्घोभवति *द्वि- तीयस्मन्तः* उत्तरास्वारसौपर्णे तृतीयायामुपाद्द्वितीयमक्षरं दीर्घो भवति सा इपा उवा सान्ता *पञ्जनिधे* उत्तरे जनित्रे पद्यन्दो- दीर्घोभवति पुरोजि तृतीयायां *रथन्तरनृपाश्विनोर्वेतप्वोस्तोभे* एतेषां साम्नां अस्तोभेप्रत्ययेदीर्घोभवति । त्वामिद्धवता । आमा- न्नोऽवा । अमाऽवा । अपो वासानो अर्पसाना अर्पसा २४ *दैर्घे व्रात्योत्तरयोश्च* त्वेमोदैर्घे उत्तरयोः स्तोत्रीययोः उद्गी- थअस्तोभेप्रत्ययेदीर्घोभवति *धेनादृतीययौक्तेप्वौकारे* इडा- न्दारान्तीययौक्तास्वेषु अकारेप्रत्ययेदीर्घोभवति । पुरा अहोहो- हाई । सा अहो हाई । मा २ न्या २ युजा अहो २ हो २ हा

योऽश्व थेलान्द्वितीयपौर्केष्वौकारे स्तांचायं कण्वतरेवैय-
नेकृष्टवृद्धयोर्मध्ये रैवते च वृण्यादिः साहीये शतायाः
स्तैत्वा इसमेद्वितीयान्तः सूर्यस्य अभिसामायायामा-
धस्यान्त्यं योधीये मघोनामेके देव्येदीधिन्वत्रावितदे-
व्ययोः स्वशब्दः स्वरयोः कुमेदभेदः श्येनेन इरी-
र्दीर्घत्वम् ॥ ३ ॥

१३ । राजा ३ *स्तांचायं कण्वतरे* मस्तांचायमक्षरं कण्वरथन्त-
रेदीर्घोभवाति परीतोपिचतासुनामित्येवमादिषु *वैयनेकृष्टवृद्धयोर्म-
ध्ये* वैयने सोमसाम्नि कृष्टवृद्धयो रक्षरयोर्मध्ये यदक्षरं तद्दीर्घ
भवति, यथा पुरोजिती सुतायामादा इत्वे *रैवते च वृण्यादिः*
रैवतेपर्भे च वृण्यादिदीर्घोभवति वृवृमसाई । यावियवाइ *सा-
हीयेशतायास्तत्वा* सत्रासाहीये त्वाशब्दस्य शतायाः परस्याय-
दक्षरं तद्दीर्घोभवति । अमातास्वा *इसमेद्वितीयान्तः सूर्यस्य*
वासमये द्वितीयान्तोदीर्घोभवति जानितासूर्यस्य *अभिसामायामा-
धस्यान्त्यम्* साम्नि अभिमोमाया आद्यस्य पादस्यान्त्यमक्षरं
दीर्घोभवति *योधीयेमघोनामेके* स्वादिष्टायां तृतीयायां जरा-
योधीये मकारस्य एके दीर्घभावं मन्यन्ते *देव्येदीधि* विराड्वा
मदेव्ये धिशब्दोदीर्घोभवति अग्निनराधा *त्वं नोवित्रदेव्ययोः*
पर्यूष्वायां । गौरीवित्रवामदेव्ययोः स्वशब्दोदीर्घो भवति *स्वस्य
शब्दः स्वरयोः* । स्वरसाम्नोः मत्स्यपायितमेहइसत्रस्वशब्दो
दीर्घोभवति *कुमेदभेदयः* नैककुमेदशब्दोदीर्घोभवति । यं
एक इद्विदाया ३ ताइ *श्येनेन इदीर्घत्वं* गोत्रिश्छेने तृतीयायां
गशब्दोदीर्घोभवति ॥

दीर्घत्वं दीर्घाभावशेषं परिसमाप्तम् ॥

इति पुष्पसूत्रभाष्ये नवमस्य तृतीया कण्डिका ।

शाक्त्येहीष्यन्तोवृद्धो शल प्लुवे वारान्तोपतयश्च दन्वतेचाधिप्रोह्यपिस्तावत्स्वरान्तो नगशस्तूपथाप्यन्ते च त्वाष्ट्री साम्निहारादियोनो नच पूर्वपञ्चरुणसामशोकपृश्निषु च नोदेदिरिक्ते शब्दा अरिष्टे च पे वी इत्येतौ शब्दौ समुद्रछन्दसि चोतायां द्वितीयस्थामरपविराजस्तायाञ्च्रेण्णादिरवृद्धः संक्षारवैश्वज्योतिष गो-

*शाक्त्येहीष्यन्तोवृद्धः* शाक्त्ये हीष्या अन्तोवर्द्धते। या ३ मा ३ दा ३ ना ३ *अशल* शलशब्दस्यापवादः। तुवा ३ गम्यू अ ३ हो ३ इशा ३ त *प्लुवेवारान्तः* प्लुवेवारान्तायाः सर्वत्रान्तोवर्द्धते *अपतयश्च* ।अकारः प्रतिषेधार्थः। हुः पा ३ रा ३ इमूपा ३२३ ताश्चायत ३ इयात्राहणाया ३ श ता३मा *दन्वते चाधिप्रः* वैदन्वते च सर्वत्र निहोतायां अन्तो वर्द्धते *अपिप्रः* स्वरिमहत्यत्रापवादः *हापिस्तावात्स्वरान्तः* बृहति प्रस्तावात्परस्य पर्वणः सर्वत्रान्तोवर्द्धते *नगशस्तूपथा* एतेषामपवादः। मत्स्यवृहत्युत्तरयोः। पञ्चावृहति तृतीयायां सुतावृहति तृतीयायां च *प्यन्ते च त्वाष्ट्रीसाम्निहारादयोनौ* प्यन्तरे त्वाष्ट्रीसाम्नि योनौ प्रतिहारादिर्वर्द्धते *नपूर्वपञ्चरुणसामशोकपृश्निषु च नोदेदिरिक्तेशब्दाः* पूर्वमानवपञ्चवरुणसामशोके पृश्निषु च योनौ देदिरिक्ते एतेशब्दा वृद्धा भवन्ति यथाक्रमेण *अरिष्टे चयेवीइत्येतौ शब्दौ* अरिष्टे च येशब्दवीशब्दौ योनावेव वर्द्धेते *समुद्रछन्दसिचोतायां द्वितीयस्य* अग्ने तव श्रवोतायां द्वितीयस्यां समुद्रच्छन्दसि च साम्नि चोतायां द्वितीयस्वरस्थमक्षरं वर्द्धते *अर* रारशब्दस्य अपवादः इरज्यच्चग्ने *पविराजस्तायाञ्च्रेण्णादिरवृद्धः* पवित्रतायां सामराजे प्रस्तावात्परस्य पर्वणः

हारादिरस्थाः शृङ्गे कौत्से वेसूष्वा चतुर्थमेकोनामन्ते राधाया अन्त्यानि वर्द्धन्ते स्यत्योत्तरयोश्चातिरोवत्यां योनिवदाद्यायामन्त्ये सर्वासु घृतनिधनायां च शूवत्यां मन्तवद्दान्त्येहोपरे द्वेशाविचोनायामाद्यङ्सकर्पाद्वि-

---

स्या २ धिंयष्टपा ३ इयो नोनीचीत्यादृहगीतीडचीभावः *निवे च पूर्वे* पूर्वे च जनित्रे तृतीयपादादिरुचीभवति *दोविशीयेहारादिः* सदोविशीये गतिहारादिरुचीभवति पञ्चमाज्या *स्था* अथपादमायां सदोविशीये स्थाशब्दोनोच्चीभवति। १ स्यावा *शृङ्गेच* हारादिरुचीभवति ऊहावपये *कौत्सेवेसूष्वाचतुर्थमेकोनाम* एडकौत्से मस्तावविपये सूष्वा-चतुर्थस्वरं भवत्येकाक्षरोना *मन्तेराधाया अन्त्यानिवर्द्धन्ते* स-मन्ते वसोराधायां अन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते। नऊताव-सोराधांस्य साईदासा *स्यत्योत्तरयोश्च* दासस्त्यउत्तरयोःस्तो-त्रीययोर्वसोराधाया अन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते *तिरोवत्यां यो-निवत्* तिरोशब्दवत्यां वसोराधायां योनिवद्द्वावृद्धंभवति *आ-द्यायामन्त्ये सर्वासु* आद्यायां च वसोराधायां अन्त्ये द्वे अक्षरे ते सर्वासु स्तोत्रीयासु *घृतनिधनायां च* घृतनिधनायां च स्तोत्रीयायां कि.? अधिकारादाद्यायां वसोराधायां अन्ते द्वे अक्षरे वर्द्धेते. *शूवत्यांमन्तवत्* शूशब्दवत्यां वसोराधायामन्तवदन्त्यानि त्रीण्यक्षराणि वर्द्धन्ते *दान्त्येहोपरे* पादान्ते अक्षरे होशब्दपरेमत्यये द्वे अक्षरे वर्द्धेते। *द्वेशाविचा* अपदान्तीयेपि विचाशाद्वौ होशब्दपरेमत्यये अक्षरे परे वर्द्धेते ग्रहणात् *ऊनायामाद्यङ्मङ्कर्पाद्व* ऊनायां वसोराधायां आद्यमक्षरं वर्द्धेते मङ्कर्पाद्वेतोः मत्द्वन्द्व आंइऊ *द्वितीयपन्यस्यां* उक्तलक्षणायां अन्यस्यां वसोराधायां

तीयमन्त्यस्यां वारे च नो राहेनो तृतीये देवृधन्तात-रुनाःश्रीवासिष्ठ उतद्विपापतिः कवीमयं दासोत्तरयो स्तृतीयोच्चाच्छतोत्पत्तिः ष्कले जास्वर उपशिक्षायां माकूपहूयसायाः क्ष्वायास्ये पुनान इत्यत्र सोमऽसो-देवृक्षोऽध्यैचेन्द्रमच्छायां व्यक्षरायामादिर्मीढेमोचं नीचं

---

द्वितीयमक्षर वर्द्धते *वारे च नो* वारवन्तीये च योनौ वसोरा-धाया द्वितीयमक्षरं वर्द्धते *राहेनो तृतीये देवृधन्तातरुतां* वा-राहे योनौ तृतीये पादे वृधन्ता तरुतामापद्यते । अन्यत्र निवृ-त्त्यर्थम् *श्रीवासिष्ठउतद्विपापतिः कवी* श्रीणंतोगोभिः वासिष्ठे उत द्विपापतिः कवीमापद्यते इन्द्रक्रतुनेतियस्ययोनिः *अयंदासो-त्तरयोः तृतीयोच्चाच्छतोत्पत्तिः* अयन्तइन्द्रसोमइतिदैवोदासो-त्तरयोस्तृतीयपोच्चान्त्यं निर्भवति *ष्कले जास्वर उपशिक्षा-यां माकूपहूयसायाः* यौष्कले जास्वरोत्पत्तिर्भवति । उपशिक्षायामृचि माकूपहूयसायाः *क्ष्वायास्ये पुनान इत्यत्र सोमऽसो देवृद्धे* सायस्क्ष्वायास्ये पुनानः सो-मायां पुनानसोमउत्सोशब्ददेवशब्दौ वृद्धौ भवतः *यौच* *यौ-शब्दश्च तस्मिन्नेव वृद्धोभवति *इन्द्रमच्छायां व्यक्षरायामादिः सायस्क्ष्वायास्ये व्यक्षरायां सोमायामादिर्वर्द्धते *मीढेमोचं-नीचं* यौरुमीढे प्रथमोच्चादिनीचं स्वरमापद्यते । यथात्वमङ्गप्र-शंसति । २२३ । *इदुवं पितापत्रमानापाश्रिवासश्च* अकारः प्रतिषेधार्थः । पितापुत्रेपवमानाभ्यर्पासिमाश्रिवासो अवक्रमुः । एतेषु प्रथमोच्चादिः नीचीभावप्रतिषेधः *जयसितश्चैतेषु शवचतुर्थे वव-पामन्द्रे* संजयगायस्यासितश्चैतेषु एतेषुभावेषु वाप इव एते त्रयः शब्दाः यथाक्रमेण चतुर्थे स्वरे भवन्ति ववप इत्येते

द्युच्चं पितापवमानामाशीर्यासश्च जयसितश्चैतेषु शायचतुर्थंवपामन्द्र ॥ ४ ॥

आदिद्योदा तस्य हट्टुक्थरूपयो र्द्वितीयं यं प्रत्युत्क्रान्तं माप्तं चाभिगीतं भीशवगतश्चैताजिगोत्तरयोनिश्रस्वारयामैपिरवाश्रयौपाहरवाचःसामहस्कामिये-

---

भयः पूर्ववन्मंद्रे भवन्ति । आते अंये तृतीयायां संजये । पवस्व देवतृतीयाया । गायत्र्यासिते इमाउवातृतीयायां द्वैते ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये नवमस्य चतुर्थी कण्डिका ॥

*आदिद्वोदास्यहट्टुक्थरूपयोर्द्वितीयं यं प्रत्युत्क्रान्तं माप्तं चाभिगीतम्* । आदिद्वोदाओहव । वस्यावार्हदुक्थवैरूपयोः साम्नोः द्वितीयमक्षरं दीर्घप्रत्युत्क्रान्तं भवति । योनिवद्यानं माप्तं प्रत्युत्क्रमायां माप्तं च हस्वमक्षरं योनिवदभिगीयते । परीतोषितृतीयायां तत्राहंसोमादिषु च वार्हदुक्थे अध्वर्यो अद्रिभिरुषातेजावैरूपे । *भीशवगत श्चैताजिगोत्तरयोनिश्रस्वारयामैपिरवाश्रवापाहरवाचः सामहस्कामियेषु* *आभीशवादिषु यदधिकृतं तद्भवति । किञ्चाधिकृतम् ? । दीर्घमभिगीतं माप्तं प्रत्युत्क्रामति । ह्रस्वं च प्रत्युत्क्राममाप्तं योनिवद्भावादभिगीयते । आभीशवे . तत्राहं सोमादिषु । योनिवदभिगीतमाप्तं प्रत्युत्क्रामति । पुनापरीतयोः द्वैगते योनिवत्प्रत्युत्क्राममाप्तमभिगीयते । पुरोजितयुत्तमायामुत्तरे जनित्रे अभिगीतमाप्तं प्रत्युत्क्रामति । वसिष्ठप्रिये स्वासूत्तमायां अभिगीतं माप्तं प्रत्युत्क्रामति । बृहत्केत्त्व्श्रुद्रंन्पापाह्युत्तरयोरभिगीतप्राप्तस्य प्रत्युत्क्रामः । तदिदासोत्तरयोरभिगीतमाप्तस्य प्रत्युत्क्रामः । आजिगे उच्चावध्यामायां प्रत्युत्क्राममाप्तस्याभिगीतः । मोअयास्या योपन्स्वारयासतस्मिन् यदभिगीयते अक्षरं

अथोऽध्यायोऽपृष्टमाउयत्प्रकृत्या तस्यग्रहणमऽपदां-

मत्युक्रामप्रतिषेधः । उत्सर्गप्राप्तस्य ह्रस्वमभिगीयते । दीर्घ-
मत्युक्रामतीति । अनेनोत्सर्गेण प्राप्त मत्युक्रामात् निवर्तते ।
आनिधने च पुरोजितानुचरयोरुत्सर्गप्रतिषेधः अभि अकारः
प्रतिषेधार्थः । अभिनर इत्यत्र मत्युक्राम एव भवति न प्रतिषिध्य-
ते । साहिति मसोमासोमदच्युताया मत्युत्क्रामप्रतिषेधः । सखा-
यामापौष्कलाद्याया उत्सर्गप्रतिषेधः । पुरोजितमध्यमाया वैतहव्ये
इदं वसोसुमायां नारेसोमउज्ज्वामध्यमाया मानवयोः दीर्घस्य म-
त्युक्रामप्रतिषेधः । उपवत्राजायाया वारवन्तीये मत्युक्रामप्रति-
षेधः । एवाहिसौभरे तृतीयाया मत्युक्रामप्रतिषेधः ऐडसौपर्णे-
इन्द्रमभिजायमानमित्यत्र मत्युत्क्रामप्रतिषेधः पुनानोअक्रमीदभी-
तियामे उत्सर्गप्राप्तस्य प्रतिषेधः कतमस्यआइह्रस्वमभिगीयते
दीर्घमत्युक्रामतीत्यस्य ।

इति पुष्पसूत्रभाष्ये नवमस्य पञ्चमी कण्डिका ।

*अथोऽध्यभावः* कोऽस्याभिसम्बन्धः ? उच्यते । तालव्य-
माद्यवृद्धमितितालव्यानां प्रकृतिविकारभाव उक्तः । अथेदानीं-
मुख्यानां प्रकृतिविकारभावअनुक्तोऽवशिष्यते । स वक्तव्यः
इत्यनेन सम्बन्धेनेदमारभ्यते । अथोऽध्यभावइति । उकार-
ऊकारऔकारअकारावस्थाः । तेषां च उस्थादीनां लक्षणा-
न्तरेण पूर्वोक्तेन विकारोन प्राप्नोति । यथा ओऔकारयो-
रकीभावे लोपः । तथाऔकारयोरनन्तरस्वरनीचाद्ययोः
प्रत्ययोः सर्वे दृष्टमाभवत्यन्तलोपश्चेति । तथा तृतीया-
दिन्यामौ होवाया चतुर्थस्योद्वः । पदान्तः सर्वत्राभवति ।
यथा आउवाव्यन्ताहितमाउ भवति । तथा अभ्यात्याय ,अक्रारो-

न्तौ दोपोदाहरणानि वक्ष्यामः ] उत्तमऐडऽवास्ये प्रतिहारोद्गीथयो-र्द्वेवान्गच्छन्तुपद्रवे बृहति चरथन्तरे च प्रतिहारेपदेषु हाविष्कृत-शाम्पददावसुनिधनचीनेडहाविष्कृतवैदन्वतायचतुर्थेषु एवमादीनि सन्ति। उकारपदान्तयिश्चापदान्तयिश्च प्रकृत्या भवति *नर-वेविकल्पेभिरा वसुसिततादितुभूरिव—वसुनसुनिधनत्वात्सोम्यं म-धु* पदान्तीयस्याप्युकारस्याप्रकृतिभाव इत्युक्त, इदानीं पदान्ती-यस्याप्युकारस्यापवाद वक्ष्यमाणेष्वोदाहरणेषु सावविकल्पवि-षये 'पदान्तीयस्य' प्रकृतिभावप्राप्तस्य 'उकारभाव उच्यते'। परेष्वप्युदाहरणेष्वेवमेव द्रष्टव्याभियावेसुवेदिति'' यावसुवाम-देव्ये प्रस्तावे प्रकृतिभावापवादः सुन्वते भूरिते वसुपार्थुरश्वे-सन्तनिनि एव शब्दोनविक्रियते निधनत्वात्सन्तनिनि सो-मपवादः सिसीदतुधुवेसद सीदतु यामपोर्गेराशिगीरस्य सौ-हीये तुत्रेपेमसयरत्वाम्रीभाः ते-वीपेदुष्वष्ट इति *सोम्यं मधु* उकारेप्रत्यये 'विक्रियते बृहति' उपद्रवविषये अन्यत्रसयस्य उपकृतित्त्वमेव यथा वारवन्तीषु एव स्थिते उकारस्याप्येवन्यथाप त्तिः परएवं स्थिते प्रत्ययत्वेन निर्देशात्सप्तमीप्रयोगः। विकृका-रे प्रत्यये इति *ऽकारः पादप्र्येपदान्तीयाधिकारमुपजीवन्नो-क्तस्यापि पदान्तीयस्य' विकृष्टे विषये प्रकृतिभावमाह ऽकारः पदान्तीयः प्रकृत्याभवति। किं सर्वत्र ? न पाद मध्येऽकारः पदान्तीयस्य प्रकृत्याभवति अन्तः पादिकः सपश्चात्प्रकृत्या भवति इदइत्युक्तं पदान्तीयस्यविक्रियत एव। उदाहरणानि सत्य इन्द्रो-त्वः पुष्पमरायद्विनिधनायास्य बृहत्सुत्संधे तु तृतीयादिन्पामौहोवा-यादिसामौ होवायादित्यपवादाभावः इन्द्रो सहस्रं यज्ञायज्ञीये इन्द्रो-समुद्रयाविशनासरूासीवनामितेषु गोजीरयाऽयाराश्वेएवमादीनि। *अथे दो*ऽकार पादमध्ये पदान्तीयः प्रकृत्याभवति इत्यस्यो-

स्तुनसतनिनिनिभनस्वात्मोम्यमधु न्योकारः पादमध्ये-
थेन्दो बभ्रोरेतरे वसोवसूनि दांनेयहोधिगोस्तावेमिन्द्
वौकारउराविमौमघौमतौतस्थौ योनौचाभे ॥ ६ ॥

---

त्सर्गस्यापमपवादः । इन्द्रायेन्द्रो इति अपवादो इयोष्टथीयकौ अवा-
पवावर्यादिषु न प्रकृत्याभवतीतिगति भवतीत्यर्थः । *बभ्रोरे*
अत्रापि प्रकृतिभावस्यैवा उभावः । किमविशेषेण ? । न, स्वारे
प्रत्यये यथा महावैराज सहादैर्घ्यनमसे च । तृतीयाया उद्गीथमध्ये ।
दुहानोबभ्रओधानि । अन्तरोरथन्तरे बभ्रोशब्दस्य स्वारप्रत्यय-
स्यापि प्रकृतिभावएव । *वसो *वसोर्वमो इत्यत्रापि ओकारः
पादमध्ये पदान्तीयः प्रकृत्या भवतीत्यस्य उपवादः । अगतिर्भवती-
त्यर्थः । क्रौञ्च रथिष्ठौ हलादिषु । अभीनोवाइत्यत्र । *वसू-
नि* अपतिषेधार्थः । इह ओ कारः पादमध्ये पदान्तीयः प्रकृ-
त्या भवतीत्येतदेव औत्सर्गिक प्रतिगस्तु *दान्तेयहोधिगोस्तावे-
मिन्दो *अन्तः पादिकस्य आकारस्य प्रकृतिभाव उक्तः । इदानीं
पदान्तावस्थितस्य ओकारस्य विशिष्टविषये परिसङ्ख्यानरूपेण
प्रकृतिभाव उच्यते । उदाहरणत्रयेण यहोईशानः सहसोयहो-
श्रुध्यपीडकलयोः । अधिगोस्तावे यज्ञायज्ञीये । गोपारिस्यत्वा
२ नो २ अक्षरदिन्दुरुध्या २ ईर्मिन्दोनुनोभार्येमहामिन्दोपामे ।
एतेष्वेव त्रिपुदाहरणेषु ओकारस्य पदान्ते प्रकृतिभावः । अन्य-
त्र विक्रियते । तदुदाहृत ऊद्ध्वा उइयत्र *आकारउराविमौ म-
घोमतौ तस्थौ *अकारस्यौत्सर्गिकेन लक्षणेन किं प्राप्त ? पदान्तः
प्रकृत्याभवतीति । अन्तःपादिकस्यौकारस्य प्रकृतिभाव उक्तः ।
परिशेषात्पादमध्ये सर्वत्र पदान्तीय अकारस्यं आउभवतीति-
स्थित वक्ष्यमाणेष्वेवोदाहरेणषु परिसङ्ख्यानरूपेण पादमाध्ये पदा-

रथतरेस्तावायमायायावृत्तसर्वत्र ण्वतरेतुरीयंनी-
चंमर्वत्र चमनजातोदग्धः सुदेवोवः षेधे च तृतीय-
चतुर्थे देदुरितावसत् आजावितोत्तरयोरेन्द्रयाहिपूर्व-

---

न्तीयस्य औ उकारस्य प्रकृतिभाव उक्तः। तस्यस्तोभप्रतिषेधस्य अत्रोच्यते। यथाउरीरभनाभेइमौभद्रौवन्तीये। मघौनमस्तत्रा-पत्रपार्थे। सुमतौवाजिनोवय। जमदग्नेरभीवर्ते तस्यौनाकस्य शार्वणि अभिनिधने। *योनौ च। योनौशब्दे च ऊकारः पा-दमध्ये पदान्तीयः स च प्रकृत्या भवति। मौदन्यौनौ वार्याहरे। *अरे *अकारः प्रतिषेधे योनौशब्दे अकारस्य प्रकृतिभाव उक्तः तस्य स्तोभे प्रतिषेधः। आउ भवनीत्यर्थः। यथापार्थे। तथा कविर्योनौ आथर्वण स्तोभे तु विशेषः। पुनरुक्तमिदं सूत्रंस्तोभे-प्रत्ययेऔत्सर्गिक एव लक्षणविशेषोभवति। यथा आथर्वणवा-र्षयोः। यथश्च अन्यथावाच्यते॥

इति पुष्पसूत्रभाष्ये नवमस्य षष्ठी कण्डिका॥

[1] रथन्तरे स्तावायमायायां वृत्तसर्वत्र* रथन्तरे प्रस्तावा-यमक्षरं आयायां सर्वत्र वृद्ध भवति। ण्वतरेतुरीयं नीचं सर्वत्र* कण्वतरे प्रस्तावे यच्चतुर्थमक्षरं नीचं सर्वत्र भव-ति* चमनजातोदग्धः सुदेवोवः*नजातोनजनिष्यते। अद्-ग्धः सुरभिनरः देवोवोद्रविणोदा इत्येतेषु पञ्चमं नीचं भ-वति *षेधे च तृतीयचतुर्थे देदुरितावसत* सिमानानिषेधे च तृतीयचतुर्थपादविषये अपसेधदुरितासोमनोमृडसहायभिर्दमतेदीत-अन्तरइति। एतयोः पञ्चमक्षरं नीचं भवति *आजावितोत्तरयो-रेन्द्रयाहिपूर्वयोः पर्यूषुचोपान्त्येषाणाविज्ञरा* आजाग्निविरिसत्र

योः पर्वसु चोपान्त्योच्चा पतिं गिरा सितेच देवाद्ययोस्तृतीयोच्चान्त्यमाग्निमीसेधेचाभिसोमाद्ययोः, पिबासुचाद्यायां, नदेवस्वास्वाद्ययोः, ङिनेचतुर्थोच्चानि यथा योनवाद्यं द्वितीयायां प्रथमे निघातान्मन्द्रे तृतीयायां च तृतीययोः, कौल्म इष्टासिकृणुष्टाम् आशुभार्गवे ऽध्यक्षरोच्चा पंचाक्षरोच्चाऽऽद्ययोर्योनिषदस्य ऽध्यमायामातूनाकूपारेचाद्यायां

---

गौरीवितोत्तरयोः । ऐन्द्रयाहिगौरीवितपूर्वयोः पर्वसु चैकर्चे च उपान्त्यमक्षरं उच्चं भवति । *पतिङ्गिरा *आद्य पर्वणि । *सिते च देवाद्ययोस्तृतीयोच्चान्त्यमाग्निवी* । आसिते पवस्वदेवाद्ययोः स्तोत्रीययोस्तृतीयोच्चान्त्यं द्रव्यमाग्निमीस्वर भवति । *सेधे चाभिसोमाद्ययोः* । उत्सेधे चाभिसोमाद्ययोःस्तोत्रीययोस्तृतीयोच्चान्त्यं द्रव्यमाग्निमीस्वरं भवति । *पिबासु चाद्यायाम्* । तृतीयोच्चान्त्य–द्रव्यमग्निमीस्वरं भवति । *न देवस्वास्वाद्ययोः* । तृतीयोच्चान्त्यं पूर्ववत् । *ङिनेचतुर्थोच्चानि । यथा योनावाद्यं द्वितीयायां प्रथमे, निघातान्मंद्रतृतीयायां च तृतीययोः* शंयाण्डिने चतुर्थोच्चस्याद्यमक्षरं नीचं भवति द्वितीयायां स्तोत्रीयायां च प्रथमतृतीयायां स्तोत्रीयायां प्रथम तृतीययोः पादयोः । *कौल्म इष्टासिकृणुष्टां* । कौल्मलबर्हिषे इष्टासिकृणुष्टास्वरमाप्यते । *आशुभार्गवे ऽध्यक्षरोच्चाः* आशुभार्गवे अक्षरोच्चा भवति सर्वत्र *पञ्चाक्षरोच्चाद्ययोः* उच्चाते जायामाशुभार्गवे आद्ययोःस्तोत्रीययोः पञ्चाक्षरा उच्चा भवति । *योनिषदास्य मध्यमायाम्* अस्य मन्त्रेत्यत्राशुभार्गवे मध्यमायां योनिषदुच्चा भवति । चतुरक्षरेत्यर्थः । *आतून कूपारे चाद्यायां, व्यक्षरोत्तरयोः* आतूनाकूपारे उत्तरयोर्व्यक्षरयोरुच्चा

रथंतरेस्तावायमायापावृत्सर्वत्र ष्वतरेतुरीयंनी-
चंस्सर्वत्र चमनजातोद्ध्यः सुदेवोवः पेधे च तृतीय-
चतुर्थे देदुरितावसत् आजावितोत्तरयोरेन्द्रयाहिपूर्वे-

---

नीपस्य औ उकारस्य प्रकृतिभाव उक्तः । तस्यस्तोभप्रतिषेधस्य
अत्रोच्यते । यथाऽउरौरगनाभेइमौभद्रौवन्तीये । यथौनमस्तग-
यत्रपार्श्वे । सुपतौवाजिनोवय । जमदग्नेरभीवर्चे तस्यौनाकस्य
चार्मणि अभिनिधने । *योनौ च । योनौशब्दे च ऊकारः पा-
दमध्ये पदान्तीयः स च प्रकृत्या भवति । मीदन्योनौ वार्षाहरे ।
*अमे *अकारः प्रतिषेधे योनौशब्दे अकारस्य प्रकृतिभाव उक्तः
तस्य स्तोभे प्रतिषेधः । आउ भवतीत्यर्थः । यथापार्थे । तथा
काविर्योनौ आथर्वणे स्तोभे तु विशेषः । पुनरुक्तमिदं सूत्रःस्तोभे-
प्रत्ययेऔत्सर्गिक एव लक्षणविशेषोभवति । यथा आथर्वणवा-
र्षेयोः । यथवा अन्यथाचास्यते ॥

इति पुष्पसूत्रभाष्ये नवमस्य षष्ठी कण्डिका ॥

॥ रथन्तरे स्तावायमायायां वृत्सर्वत्र* रथन्तरे प्रस्तावा-
यमक्षर आयाया सर्वत्र हृद्ध भवति ॥ ष्वतरेतुरीयं नीचं
सर्वत्र* कण्वतरे प्रस्तावे यच्चतुर्थमक्षर नीचं सर्वत्र भव-
ति* चमनजातोद्ध्यः सुदेवोवः*नजातोनजनिष्यते ॥ अद्-
भ्यः सुरभिनरः । देवोवोद्रविणोदा इत्येतेषु पञ्चमं नीचं भ-
वति *पेधे च तृतीयचतुर्थे देदुरितावसत* सिमानानिषेधे च
तृतीयचतुर्थपादविषयेअप्रतेधंदुरितासोमनोपृडमद्धावाभिर्वसतेवीव-
अध्वरइति । एतयोः पञ्चममक्षरं नीचं भवति *आजावितोत्तरयो-
रेन्द्रयाहिपूर्वयोः पर्युपुवोपान्त्योवाणितोद्भरा* आजाप्रवित्रिरिसत्र

योः पर्श्वषु चोपान्त्योच्चा पतिं गिरा स्तितेच देवाद्ययोस्तृतीयोच्चान्त्यमाग्निमीसेधेचाभिसोमाद्ययोः, पिवास्तुचाद्यायां, नदेवस्वास्त्राद्ययोः, डिनेचतुर्थो-च्चानि यथा योनात्वाद्यं द्वितीयायां प्रथमे निधा-तान्मन्द्रे तृतीयायां च तृतीययोः, कौल्म इष्टा-सिकृणुष्टाम् आशुभार्गवे ऽप्यक्षरोद्या पंचाक्षरोच्चा-ऽऽद्ययोर्योनिषदस्य ऽध्यमायामातूनाकूपारेचाद्यायां

---

गौरीवितोत्तरयोः । ऐन्द्रयाहिगौरीवितपूर्वयोः पर्श्वषु चैकर्चे च उपान्त्यमक्षरं उच्चं भवति । *पतिङ्गिरा *आद्य पर्वणि । *स्तिते च देवाद्ययोस्तृतीयोच्चान्त्यमग्निमी* । आस्तिते पवस्व-देवाद्ययोः स्तोत्रीययोस्तृतीयोच्चान्त्यं द्रव्यमाग्निमीस्वरं भवति । *सेधे चाभिसोमाद्ययोः* । उत्सेधे चाभिसोमाद्ययोःस्तोत्री-ययोस्तृतीयोच्चान्त्यं द्रव्यमाग्निमीस्वरं भवति । *पिवास्तु चा-द्यायाम्* । तृतीयोच्चान्त्य द्रव्यमाग्निमीस्वरं भवति । *न देवस्वास्त्राद्ययोः* । तृतीयोच्चान्त्यं पूर्ववत् । *डिनेचतुर्थो-च्चानि । यथा योनात्वाद्यं द्वितीयायां प्रथमे, निधातान्मंद्रतृतीयायां च तृतीययोः* शखण्डिने चतुर्थोच्चस्याद्यमक्षरं नीचं भवति द्वितीयायां स्तोत्रीयायां च प्रथमतृतीयायां स्तोत्रीयायां प्रथम तृतीययोः पादयोः । *कौल्म इष्टासिकृणुष्टां* । कौल्मलबर्हिषे इष्टासिकृणुष्टास्वरमाप्यते । *आशुभार्गवे ऽप्यक्षरोद्याः* आशु भार्गवे अक्षरोद्या भवति सर्वत्र *पञ्चाक्षरोच्चाद्ययोः* उत्ताते जायामाशुभार्गवे आद्ययोःस्तोत्रीययोः पञ्चाक्षरा उच्चा भवति । *योनिषदस्य मध्यमायाम्* अस्य प्रत्नेत्यत्राशुभार्गवे मध्य-मायां योनिवदुच्चा भवति । चतुरक्षरेत्यर्थः । *आतून कूपारे चाद्यायां, त्र्यक्षरोत्तरयोः* आतुनाकूपारे उत्तरयोर्त्र्यक्षरयोरुच्चा

द्व्यक्षरोत्तरयोः, अच्छिद्रैकर्चैणोनीचः द्वेतः शब्दश्चावृद्धौ विचे प्रत्यये, वृद्धः सिते वृणपन्तः, क्षीवते द्वितीयपादान्त्यमद्वितीयस्वरम्, विशीये मोच्चादि नीचो नौ आह्विन्वंति सर्वासु, क्षीयक्ष्वांयायां क्षीयवद्, अन्यदुच्च सकृत्कृष्टं च तृतीयं नौ द्वितीयमुत्तरयोः, एकाक्षरे णिधने च जये शताद्वितीयम् ॥ ७ ॥

भवति *अच्छिद्रैकर्चे णोनीचः द्वेतः शब्दश्चावृद्धौविचे प्रत्यये* यहिन्वानाच्छिद्रे णोशब्दो नीचो भवति । शब्दस्य अवृद्धो भवति विचशब्दे प्रत्यये। *वृद्धः सिते वृणपन्तः* । आसिते अयं पूपादिषु वृणीमहाया अन्तो वर्द्धेत । सर्वमार्चिकमवृद्धमुत्तरे पुष्पे णोनित्त्वाभावात् आकर्षणकृता वृद्धिः प्राप्नोति, तस्य निवृत्त्यर्थमिदमुच्यते सर्वमार्चिकमवृद्धमुत्तरेपुष्प इति *क्षीवते द्वितीयपादान्त्यमद्वितीयस्वरम्* । काक्षीवते द्वितीयपादान्त्यमक्षरे अद्वितीयस्वरं भवति अतिक्रमो भवतीत्यर्थः । *विशीये मोच्चादि नीचो नौ* विशोविशीये प्रथमोच्चादापमक्षरं नीचं (१)भवति योनौ। अभिवो३३। *आह्विन्वन्तिसर्वासु* । अकारः प्रतिषेधो हिन्वन्ति विशोविशीये प्रथमोच्चादन्त्यमक्षरं नीचं भवति सर्वासु, अर्थादन्यत् सर्वमुच्चम् । *क्षीयक्ष्वांयायां क्षीयवत्* यज्ञायज्ञीयवत्सु विशोविशीये आद्यायां यज्ञायज्ञीयवत्प्रथमोच्चं भवति । *अन्यदुच्चं* । अन्यत्प्रथमोच्चं विशोविशीये सर्वमुच्चं भवति । *सकृत् कृष्टं च तृतीयं नौ* । सकृत्कृष्टं चाक्षरं प्रथमोच्चं तृतीयोच्चं भवति *योनौ विशोविशीये *द्वितीयमुत्तरयोः*योनावितरोत्तरयोः प्रथमोच्चद्वितीयमक्षरं सकृत्कृष्टं भवति । *एकाक्षरे णिधने च जये शताद्वितीयम्* । एकाक्षरे णिधनेच चौथाजये शतात् द्वितीयस्वरापत्तिर्भवति ।

इति पुष्पसूत्रभाष्ये नवमस्य सप्तमी कण्डिका ॥

---

(१) नीचांभवतीति पाठः ।

गूर्द उत्तरयोर्होतायक्षाम्, ऋतुष्वा श्रीयवत्तौरे प्र-स्तावो योनौ मत्न॰सधस्थायां यजिसंघातवत्, पूर्वा-र्कपुष्परयिष्ठयोः स्तौभिकं पर्वानुपाद सामान्ते सर्वाणि आर्चिकमक्रुष्ट॰सर्वत्राऽयोनौ, वैधुते ष्ठे नौ थे रे च द्वितीयम्, वाभ्रे चायोनौ, छिद्रे ऽभिसो-माद्यायांनीचंव्यभ्यासे श्रीयर्क्षु विशीर्यास्वायाऽस्या-

---

*गूर्द उत्तरयोर्होतायक्षाम्* । गूर्द उत्तरयोः स्तोत्रीययोर्हो-तायक्षा संघातमापद्यते यक्षादयासी *ऋतुष्वाश्रीयवत्तौरेप्रस्ता वोयोनौ* ऋतुष्टायज्ञायज्ञीये यद्रूपः प्रस्तावः तौरश्रवसेऽपि तद्रूपः प्रस्तावो भवति योनौ तु प्रकृतिरापद्यते विकाराविवक्षया । *प्रत्न॰ सधस्थायां यजिसङ्घातवत्* । प्रत्न॰सधस्थाया तौरश्रवसे प्र-स्तावे यजिसङ्घातवत् प्रस्तावो भवति । *पूर्वार्कपुष्परयिष्ठयोःस्तौ-भिकं पर्वानुपादम्* । पूर्वार्कपुष्पे रयिष्ठे च स्तौभिकमेव पर्वानुपादं भवति । संपादमनुगतं भवति । *सामान्ते सर्वाणि* । स्तौभिकानि पर्वाणि सर्वाणि भवन्ति । यथा—परीतोषिञ्चतापञ्चस्वादिषु । *आर्चिकमक्रुष्ट॰सर्वत्रायोनौ* पूर्वार्कपुष्परयिष्ठयोरार्चिकमक्षरं अक्रुष्टं भवति सर्वत्रायोनौ । योनावेव कर्षणं भवति नान्यत्र *वैधृते ष्ठे नो थे रे च द्वितीयम्* वैधृते वासिष्ठे योनौ उद्गीथे प्रतिहारे च द्वितीयमक्षरं ह्रस्वं भवति । एषप्रकोशे ऊहगीतौ न भवतीत्यर्थः । अभिप्रियाण्या । *वाभ्रे चायोनौ* । वाभ्रे च उद्गीथाद्वितीयं वर्द्धते । अग्नीपुत्रोरयीणामित्येवमादिषु । अयोनौ योनौ तु प्रति-षेधः ॥ *छिद्रेऽभिसोमाद्यायां नीचं ष्यभ्यासे* । अच्छिद्रे अभि-सोमाद्यायां धीसेतदक्षरं नीच भवति अक्षरसंघातविषये धीशब्दो नीचो भवति न पूर्वस्मिन्प्रथमे । *श्रीयर्क्षु विशीयान्त्यायाऽस्या-

मान्माभयोरैकत्त्वान्माभासं पूर्यते, द्विस्वरे विरामर्मेके पवृहति च शतान्माभयोः अङ्गोरूपध्यमायामुस्थमाउयायां विरामम्, डिनतृतीयायाऽस्तोवऽभ्यासाभीवमेके रं घोपे वा विसर्जनीय आम्नायसिद्धत्वाद्, यद्धृती क्रौञ्चे तृतीये पादे तृतीयोच्चमभीवर्त्तवद्, ददम्राणतृतीयायां च रक्षाशतासूत्वे, पतिः

---

मान्माभयोरेकत्वान्माभामासंपूर्यते* । यज्ञापद्दीयर्धुं विशोविद्दीयद्दोत्रीयायां स्यामान्माभयोरेकत्वान्माभा सम्पूर्यते ॥ *द्विस्वरे विराममेके* । तस्या एव माभाया चतुर्थे स्वरे एके आचार्या विरामं मन्यन्ते *वृहति च शतान्माभयोः* । होयर्धुं कण्वबृहति अस्यायां शतान्माभयोरेकत्वं द्वस्वात् माना संपूर्यते । द्विस्वरे च विराममेके आचार्या मन्यन्ते । *अङ्गोरूपध्यमायामुस्थमाउयायां विरामम्* । अङ्गोरूपध्यमायां उस्थमक्षरस्य आउवायां परभूतायां विरामं(सन्धीयत)भवतीत्यर्थः । *डिनतृतीयायाऽस्तावेऽभ्यासाभीवमेके* । वीतडिनतृतीयायां मस्तावे अभ्यासे मृत्यये आर्भावमेके आचार्या मन्यन्ते *रं घोपे वा विसर्जनीय आम्नायसिद्धत्वात्* रेफापत्तिर्वा विसर्जनीयस्य भवति घोपे नःस्यये । कस्मादाम्नायसिद्धत्वात् । तथैव हि आम्नातं कृतमूहगाने । *वृहती क्रौञ्चे तृतीये पादे तृतीयोच्चमभीवर्त्तवत्* । क्रौञ्चे तंवोतिमन्त्रायां तृतीये पादे तृतीयोच्चं पूर्वमभीवर्त्तवद्भवति । नौ चतुर्थमन्द्रेष्वसृतिर्भवन्ति । *ददम्राणतृतीयायां च रक्षाशतामुत्वे* निधुं ददम्राणतृतीयायां च अभेरक्षा शतामुत्वे यथा तद्वस्मस्येतस्याः । आद्यस्याक्षरस्य लोपार्थं वचनम् । अन्ये पुनरिहाप्येक इति अधिकारमनुमारयन्ति चशब्दात् । तेषां पक्षेणतनातृती-

कचीपुचान्त्यस्याक्षरस्याऽभ्यासः सर्वास्वतृतीये पादे कृष्टवृद्धयोर्मध्ये गीतं लुप्यते, कीर्त्यंयशः संऽसर्पे पुनांस्त्येपतिः शब्दौ नीचौ, अरोचयत्सर्वत्र असूर्यंऽ, श्यैते, हुम्मा, ज्ञीयवत्क्षारादिश्च गौशृङ्गे संजया भीशवचैयश्वसाश्रादिषु लक्षणसिद्धत्वाद् द्रव्यान्तर एकं पर्व भवति, नमसा लेपवच्छायन्तीये, मराये ह्राव-

---

गादिना एव भवति । *पतिः कचीपु चान्त्यस्याक्षरस्याभ्यासः सर्वास्वतृतीये पादे* । पतिः कचीपु चान्त्यस्याक्षरस्याभ्यासः सर्वासु तृतीयपादवर्जम् । *कृष्टवृद्धयोर्मध्ये गीतं लुप्यते* । नैमेतद्वाणवतीषु । *कीर्त्यंयशःसऽंसर्पेषु चान्त्येऽभ्यपतिः शब्दौ नीचौ* कीर्त्यंयशःसंसर्पेषु प्रस्तावान्त्येवर्णान्तिस्थोवर्णोनीचो भवति । इन्द्रमिद्देववातये आयन्तःपुनानादिषु *अरोचयत सर्वत्र* । इन्द्रः सूर्यमरोचयदिति सर्वत्र नीचीभावः । त्वमिन्द्रयशा असीत्यत्र *असूर्यम* । अकारः प्रतिषेधार्थः । अन्तस्थोऽपि न नीचो भवति । आयन्त इव सूर्यम् । *श्यैतेहुम्माज्ञीयवत* । श्यैते हुंमायज्ञायज्ञीयवत भवति । कर्षणस्य निवृत्यर्थं वचनं । *क्षारादिश्च गौश्टङ्गे* । गोश्टङ्गे क्षारादिर्यज्ञायज्ञीयवत प्रस्तावान्ते । *सजयाभीशवैयश्वसाश्रादिषु लक्षणसिद्धत्वाद् द्रव्यान्तर एकं पर्व भवति* । सञ्जयाभीशवैयश्वसाश्रादिषु बृहल्लक्षणसिद्धत्वात् द्रव्यान्तरे ऊद्गीतावेकं पर्व भवति । कथं सा सिद्धिरिति चेत् । आह त्रापिणीयास्त्वयंत-स्वकृतंप्रथमोच्चारसंहन्यतइस्त्र स्वं स्तत्राणीतिग्रहणात् । तथा अग्ने उत्तमगीने वर्द्धत इत्यत्र, तथा देनीचानामित्यत्र पोतीयसी-तिग्रहणात् । *नमसा लेपवच्छायन्तीये* । अच्छानः आयन्तीये

घान्तः कृष्टो वैराजे चायोनौ विनतप्रतिषेधो, वैरूपे तु देवतापदं देवतापदं निधने ॥ ८ ॥

अग्ने स्त्रिणिधन उष्वायां द्वितीयपादे द्वितीयं ह्रस्व-मान्गोवत्स्यां चानीकपायामाद्यं, त्रुष्मि च शोके प्रस्वरे, धा उत्तरे दंष्ट्रे, सोशब्दे दासे, दुरथेऽभिगीतक्रमयोर-हर्षं मेधे हाविस्तोभात्तृतीयमयोनौ, काव्ये गीथपष्ठ*

अत्रायन्नासोनमसेतिकालेयवदुच्चं नीचीभवति । *मराये हा-उवान्तः कृष्टः* । मराये हाउवान्तमक्षरं संकृष्टं भवति ऊहगीतौ । *विराजे चायोनौ विनतप्रतिषेधः* । महावैराजे च अयोनौ विनतपर्वणः प्रतिषेधः । *वैरूपे तु देवतापदं देवतापदं निधने* वैरूपे तु देवतापदं देवतापदमेवं निधनक्रमो भवति ऊहगीतौ ॥

(१)इति नवमस्याष्टमी कण्डिका ॥

*अग्नेस्त्रिणिधन उष्वायां द्वितीयपादे द्वितीयं ह्रस्व*। अग्नेस्त्रि-णिधने सोमउष्वायां द्वितीये पादे द्वितीयमक्षरं ह्रस्वं भवति प्रथमा-यां स्तोत्रीयायां । *मान्गोवत्स्यां चानीकपायामाद्यं* मान्गोशब्द-वत्स्यां चानीकपायां आद्यमक्षरं वर्द्धते । सोमत्रुष्वास्त्रिणिधने द्विती-यायाम् । *त्रुष्मि चाशोके प्रस्वरे* त्रुःशब्देपि शब्दे च प्रथमे स्वरे ऽवोऽपिशो वर्द्धते वैशोके । जनन्तः । अया३ *धा उत्तरे दंष्ट्रे* उत्तरे दंष्ट्रे धाशब्दो वर्द्धते । *सोशब्दो दासे* । सोशब्दो राधिदासे वर्द्धते । अयन्न इन्द्रसो३ *दुरथे-ऽभिगीतक्रमयोः* । बार्हदुरथेच्चाभिगीतप्रत्युक्रमयोः परमक्षरं व-र्द्धते । *अहर्षं* । अकारः प्रतिषेधार्थः । बार्हदुरथेऽद्विमात्रस्य आवादः हर्षशब्दस्य । *मेधे हाइस्तोभात्तृतीयमयोनौ* । ना-

(१) उपाध्यायाजातशत्रुरचिते पुष्पभाष्ये पञ्चमस्याष्टमीकण्डि-केतिपाठः पुस्तकान्तरे ।

त्तमायाम्, अभिसोमाध्यास्यायाः सर्वत्र, योनौ द्वीडे घर्ताद्यक्षरं पर्व दीचोद्धातपरत्वादेकाक्षरमूनमधिकप-र्वत्वाच्च प्रथमस्वरं मत्यये क्रुष्यते अभिमि ऽयक्षराणि सर्वासु, न द्वितीयचतुर्थे पादे, मराये ऽभ्यासएका-क्षरस्त्रिरुक्तपादान्ते सर्वत्र, अपुरोनः, पादमध्ये च हि-शब्दस्याः ऽभ्यासः प्रेद्धायामग्रे दीदिहि ॥ १० ॥

सति द्वितीय एव नशब्दः सन्ध्यगीतो भवति। मणपात्कुण्डपायि-याः। *स्वासु साहीये चोत्तमायां *स्वासु सत्रासाहीये च उत्त-मायां मस्तावविषये नकारः सन्ध्यगीतो भवति अधिकारात्। शिक्षा२णइन्द्राय आ। *अभिसोमाध्यास्याया सर्वत्र*। अभि-सोमाध्यास्ये माहन्वानायां सर्वसाम्सुनकारः सन्ध्यगीतो भवति। विकारात्। शिक्षा पाईदुऽवा।देपु णोहर्यतो। ३३। *योनौद्वीडे-घर्ता द्यक्षरं पर्वदीचोद्धातपरत्वादेकाक्षरमूनमधिकपरत्वाच्चप्रथम-स्वरमत्यये क्रुष्यते*। योनौ द्वीडेघर्ताद्यक्षरं कश्चन ऊहगीताव-धिकं पर्वत्वाच्चान्तः प्रथमस्वरामत्यये दीशब्दः क्रुष्यते। सिद्धोप-न्यासो विशेषविवक्षया। घर्तादी ३३। *अभिमि ऽयक्षराणि सर्वासु*। अभिमियायां द्वीडे अक्षराणि सर्वासु स्तोत्रीयासुभव-ति। *न द्वितीयचतुर्थे पादे* ऽयक्षराणि पर्वाणि भवंतीति यदुक्तं तस्यापवादः। किमविशेषेण अत्र आह—न द्वितीयचतुर्थे-पादे। *मराये ऽभ्यास एकाक्षरस्त्रिरुक्तः पादान्ते सर्वत्र* मराये साम्नि अभ्यास एकाक्षरः सर्वत्र त्रिरुक्तः पादान्ते सर्वत्र भवति। सिद्धोपन्यासो विशेषविवक्षया॥ ण्वो ण्वो ण्वोः। *अपुरोनः पादमध्ये च हिशब्दस्याभ्यासः ऽप्रद्धायामग्रे दीदिहि*। अत्रैव

---

(४) णोर्ह्यतो ३ पाठ.।
(५) अभिमीत्यधिकः पाठ.।

परपऽनातृतीयं क्रुष्टम प्रत्युत्क्रान्तमाचतुर्थक्रुष्टन्तुपादान्ते
मन्द्रकृष्टश्चामन्द्रकृष्टश्च वृषेव्यंजनानानां सनित्य इत्ये-

सर्वशब्दोऽधिकारव्यतिरेकार्थः अन्यत्रापि सर्वत्र वाचिप्रत्यये ओ-
भावो भवतीत्यर्थः । यथा श्रौतकक्षाणमगौरीविताभीवर्त्तेवात्सगृहा-
दिषु । *अनुस्थम्* अकारः प्रतिषेधार्थः उस्थस्य वाक्प्रत्ययस्या-
पि ओभावप्रतिषेधः यथा स्वासु स्वारसौपर्णे तिसृषमित्यत्र उ-
स्थग्रहणेनउकारऊकारौ गृह्येते । *ओत्रापरायां लोभवति*
ओत्रापरायां तु वाचि उस्थमप्योभवति । यथा जागृरित्यत्र गौ-
श्रृङ्गे । रथिरासः सुतां । तथा हारायणमसोमदेववीतय इ-
त्यादावां । अच्छाक्रोशंमभोवा ३ । तथा कौत्सल्यदिपेपरी-
तोऽप्युत्तमायां श्रीणं तोगोभिरोवारि *अनातृतीयं क्रुष्टं*
अकारः प्रतिषेधार्थः वाचिसर्वमोभवतीत्यस्योत्सर्गस्यायमपवादः ।
आतृतीयक्रुष्टं तु वाक्तृतीयमपि न ओभवति । यथा-
ऽऽधीगववृहदाग्नेयस्वारसौपर्णेषु प्रतिहारे *अप्रत्युत्क्रान्तम्*
अकारः प्रतिषेधे इह प्राक्प्रत्ययस्यैव पूर्वपदापवादः । यत्
प्रत्युत्क्रान्तं प्राक् प्रत्ययं तस्य ओभावप्रतिषेधः । यथा अच्छि-
द्रांशोऽग्रुपसन्तनिषु *आचतुर्थक्रुष्टं तु पादान्ते* इह वाचि-
सर्वमोभवतीत्यत्राविशेषोदाहरणात् ग्रहणात् । आक्रुष्टचतुर्थं
तु यदि पदान्ते भवति ततः सर्वमोभवति । ओभावा-
धिकारोऽनुवर्तते उदाहरणं बृहतीज्यायासु श्रुधीहवायां च ।
सर्वासु वारवन्तीये *मन्द्रकृष्टं चामन्द्रकृष्टं च* ओभवति ।
आमन्द्रकृष्टं च सर्वत्र । यथा दायोदादीनि । मन्द्रकृष्टे वार्तोहा-
दीनि अमन्द्रकृष्टे *वृषेव्यंजनानां सनित्यपदस्थेभ्यः परो-
ऽभ्यासश्चैतेभ्यः* पदुपधोस्तृतीयायां न्यवाच्छे आकारोऽभ्या-
सः । एतनातृतीयायां नावाच्छे अकारोऽभ्यासः । अग्निरायाम-

भ्यः परोऽभ्यासश्चैदैव्य औणायिचयोरो भवति यकारे सानौशब्दश्च सर्वत्राकारे घोषीयानिधने च घोषे ॥ २ ॥

श्रीक्रौंचप्रमशाक्त्यसंजयभरक्रंदाभिकार्णश्चवइयैता- कूप विशोविभीशककुभरथारपर्णश्वादिव्यायास्य द्विनिकाण्यकार्तयवइयाषाढवयश्वेषु चज्ञेया मध्यसम- न्वितानिधनंऽहीव्येपुवासामसु ॥ ३ ॥

न्यपशब्दे यकाराभ्यासः तेषामभ्यासानामोभवति । तदेतत्पुनरुक्तं, दैव्यआकाराकारयकाराराभ्यासएना तयोऽथिमितिनिधने च नि- त्यमात्वमितिसिद्धत्वात् *अणायिचयोरोभवतियकारे* अणायिच- योरत्वोभवति यकारे प्रत्यये । इदमपि च पुनरुक्तमेव *सानौ- शब्दश्च सर्वत्राकारे । *सानौशब्दश्च सर्वत्र ओभवति अकारे प्रत्यये । नौशब्दश्च सर्वत्राकारेओभवतीति सिद्धमेतत् । तस्मा- दिदमपि पुनरुक्तमेव । उदाहरण हुपापवित्रेअभिसानोअव्ये *घोषीयेनिधने च घोषे* घोषीयानिधानेषु च घोषे प्रत्यये च तुंडा शब्दः घोष एव विशेषणं नोपाधत इति चेत् । आह । दर्शनार्थमेतदुच्यते । घोषप्रत्यये ओभवतीति । यथा अभिघोषे- मजयज इति । अथवा विप्रतिपत्तौनियमार्थं । घोष एव प्रत्य- ये ओभवतीति नघोष इति । कथं विप्रतिपत्तिरिति । उच्यते । ऊर्द्धं व्यंजनादिशादिविश्लिष्टमुपेषुरित्येवमारभ्यते ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य

द्वितीया कण्डिका ।

*श्रीक्रौंचप्रमशाक्त्यमजयभरक्रंदाभिकार्णश्च श्येताकूपारे- शोविभीशककुभस्वापर्णश्वादिव्यायास्य द्विनिधनकाण्वकार्त्यय- यवइयाषाढेषु च ज्ञेया मध्यमसमन्वितानिधनंऽहीव्येषुगसामसु* एषुसामसु याहीपी [illegible] सामध्येसामनिधनंभवति । तत् किं । उ-

इयैतेतृतीयादिन्याओहोवायाः परं तृतीयं नीचं नतद्विप्रांत्ययो र्बृहतिचद्रासाद्वितीयेकश्सर्वत्रा दर्शभ्यमच प्रथमतृतीयइदयपंयीसूचा कृत्स्नावतृतीयंनीचमाप्यते । तालव्यमाह आयिमास्यनिधनेहीपीस्थामितिनोपद्वस्यमतिमसवार्थम् ।

इति उपाध्यायजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य तृतीया कण्डिका ।

*इयैते तृतीयादिन्याअहोवायाः परं तृतीयं नीचं* इयैतेतृतीयादिन्या अहोवायाः परं यत्पर्व तत्र तृतीयमक्षरं नीचं भवति । द्वितीये स्वरे भवतीत्यर्थः । तृतीयादिन्या इति विशेषणं मन्द्रस्वरादौ होवाइनिधनादौ्विधत इत्यतोविशिष्यते । तृतीयादिन्या इति । *न तद्विमान्त्ययोः* पूर्वलक्षणमास्यापवादः । तदिदाइयैते प्रथमान्त्ययोः स्तोत्रीययोः द्वितीयस्याक्षरस्य नीचीभावो न तृतीयस्य *बृहति च द्रासाद्द्वितीये.कश्सर्वत्र* बृहति च द्रासात्पर्वणः पुरस्ताद्द्वितीये स्वरे एकाक्षर सर्वत्र भवति । कतमस्य द्वितीयस्वरापत्तिरिति । द्वितीयस्येति ब्रूमः । कुतः । नतद्विमान्त्ययोरितिद्वितीयाधिकारात् । *अदर्शभ्यमच* । सोमाः पवन्ताया बृहति उत्तरयोः स्तोत्रीययोरपवादः तृतीयं नीचं भवतीत्यर्थः । सुरासोमदर्शी इयमस्यभ्यमच । *प्रथमतृतीयइदयपसीसूच इदयपयीसूचेतिपाठः *द्रासात्परस्यैव पर्वणः अयं विशेष उच्यते । प्रथमस्वरातृतीयस्वरे भवति । प्रथमस्वरस्य तृतीयस्वरापत्तिर्भवतीत्यर्थः । एकाक्षराण्युदाहरणानि । इकारः मत्स्यबृहति प्रथमाया । इपतियत्ण इति इकारः । किमितेविष्णाविति प्रथमाया अस्मद्वृषग्रहणत्वत् । पदेदकारेः । अनेव द्वितीयाया तव्याहयं यमन्दः । अत्रैव तृतीयायां गिरोमे यूयं

यामापाद्यं ध्यमायां तमसेचांधाद्वितीयेनक४सर्वत्रायो-
नौ प्रथमेदे स्तोभेचोत्तरेचकार ओभवत्यत्वे हिष्ठीयगव-
पसितेषु सचयघृ२सर्वत्रान्त्यमपोनौ वसुचाद्वितीया दस्तु
तिथेचतृतीयेप्रथमंयोनौ जयेचस्तावान्त्यमयोनौ ॥ ४ ॥

पंकारः । सहस्रधारायां सोमस्य वीरायीर्याकारः । सूकारः सद्रुद्-
यायां बृहस्पेव सुशर्मास्तु *आकूस्तावच तृतीयंनीचमाद्यायां*
आकूपारआद्यायां स्तोत्रीयायां तृतीयमक्षरं नीचं भवति *आद्यंध्य-
मायां *मध्यमायां स्तोत्रीयायां आकूपारे प्रस्तावाद्यस्य नीचीभा-
वः *तमसेचान्धाद्वितीयेनेकु४सर्वत्राऽयोनौप्रथमेदे* सहोदेर्धनम-
से धात्वर्णः परस्मात् आन्धात्परस्तादित्यर्थः । द्वितीयस्वरे अने-
कमक्षरं सर्वत्र भवति प्रथमपादे अयोनौ योनिवर्जमित्यर्थः । अने-
काक्षराभावात् यस्तेयोधीये श्रुधीहवायां सर्वांस्तुप्रथमादीन्युदाह-
रणानि । *स्तोभेचोत्तरेचकारओभवति अत्वे उत्तरे च *स४स्तो-
भेचकार आभवति । किं सर्वत्र । न, अर्थे । किमुक्तंभवति । यस्य
वर्णस्य आत्वं रूपं तस्मिन्नत्वमान्तेवर्णेमत्यपभूत इत्यर्थः । यथानर्द-
यायां वशब्दस्योत्वं भवति *हिष्ठीयगवसितेषु सचपघृसर्वत्रा-
न्त्रान्त्यमयोनौ *यद्वाहिष्ठीये पूर्वं अवगव अनुष्टुभसितेषुयथासं-
ख्येनसप्तमचतुर्थपञ्चमेषुपर्वसुचान्त्यमक्षरं वृद्धंभवति । यथाहिष्ठी-
यसप्तमेपर्वन्यन्तस्याक्षरस्य वृद्धिः एवमेवपरयोः *वसुचाद्वितीयाद*
ग्रैककुभेद्वितीयात्स्वरात्परः वशब्दो वर्द्धतो । नासुमनीऽया ।
*अस्तु* अत्रनतु शब्दोनवर्द्धते *तिथेच तृतीयेप्रथमयोनौ *देया
तिथे च तृतीये पादे प्रथममक्षरं वर्द्धतेयोनौ *जयेचस्तावान्त्याम-
यपोनौ*असञ्जयेच प्रस्तावान्त्यमक्षरं वर्द्धते अयोनौ ।

इति उपाध्यायाजातशत्रु कृते पुष्पभाष्येदशमस्य
चतुर्थीकण्डिका ।

क्रौंचेदेचमात्प्रथमोच्चम सूरासो येचतृतीयाद्वेष्णा- त्तृतीयं नमसो श्रवसआयिंद्रात्ताज्जेनिलोप उतद्विपाया- श्चाद्यश्रवाय्याश्च सेधेतुपत्नंपीयूषायायाय्सत्राद्यस्यलो-

*क्रौंचेदेचमात्प्रथमोच्चम्* आष्टमिकेक्रौंच पादे पञ्चमादक्ष- रात्परस्तात्प्रथममुच्चम्भवति । प्रथमतृतीयेषु पादेषु पञ्चमक्षर- मुच्चं भवतीत्यर्थः *असूरासः* *अकारः प्रतिषेधार्थः । सूरासोनदर्शतासः इत्यत्र सप्तमपक्षरमुच्चंभवति *येचतृतीयाद्वे- ष्णात् तृतीयं *जराबोधीये तृतीयात्पर्वणः परस्माच्चतुर्थे पर्वणि- तृतीयमक्षरमुच्चं भवति *नमसो* मसोमयाहीत्यत्र बोधीये चतुर्थे पर्वणि तृतीयस्योच्चीभावप्रतिषेधः अत्र तु द्वितीयमक्षरं भवति *श्रवस आइन्द्रात्ताज्जनिलोपः *तौरश्रवमेयोनौ तृतीये पादे च- त्वारि पर्वाणि आइन्द्राचाजानित उताद्विपाद्यवाच आ ३ इमा ३ कष्टुमा ३ पा ३ वाय ३ पुम ३ तत्र ऊहगीतौ आइन्द्रात्तात्पर्व- णः परस्ताज्जनिलोपोभवति ससायोदीयत्रतृतीये पाद परो ३ द- मास्या इदा ३ ता ३ पिस ३ ता ३ त्रीणिपर्वाणि भवन्तीत्य- र्थः। *उतद्विपायाश्चाद्यं* यथात्रा उताद्विपातस्याआद्यमक्षरं लुप्यते अक्षराभवतीत्यर्थः। *श्रवायाश्च* अद्यमक्षरं लुप्यते। ता इसू ३ ताः ३। यत्र चत्वारिं पर्वाण्यभिधीयन्तेतेषां कथमिति? ऊहगाने योनिवत्स्वरास्तोभाभ्यासोविरामा इति योनिवदेव चत्वारि पर्वा- णि प्राप्नुवन्तिअल्पाक्षराणि भवन्ति। कनीयास्वादिनोन्हो ३ इति वचनात्। *सेधे तुपत्नंपीयूषायायाय्सत्राद्यस्यलोपः* उत्सेधे तु अत्नपीयूषायां सत्राहणामित्याद्यसात्रि यः संघातस्तस्य संघात- स्याद्यं यदक्षरं तल्लुप्यते *क्रातीनि तृतीये दे सर्वत्र रम्यते *सं- क्रातीनि ऊहगीतौ बृहतीषु गीयमानस्य तृतीये पादे विरामोभव- ति। *अनुष्टुप्छंद्वितीये च*। अनुष्टुभि गीयमानस्य संक्रातीनि

पःकृतिनितृतीयेदेसर्वत्ररम्यतेनुष्टप्द्वितीयेच-पभेच
प्राक्चतुर्णेदचयोनावोमितिचनीचः श्चेतृतीयेपतृपद्दर-
एरूर्चेद्धे दसंज्ञीयेहाराद्योनिव दविशोत्तमायाःसोमा-

द्वितीये पादे विरामोभवति *पभेच* शाक्व रर्षभे च अनुष्टु-
भि गीयमाने द्वितीये पादे विरामोभवति । यत्रस्व वाजेत्यत्र पा-
दस्यानुष्टुभ्सु द्वितीये पादे द्वैधं व्यूहेदित्येतदुक्तं भवति *प्राक्-
चतुर्णेश्चय योनावोमिति चनीचः* प्रागुक्तं द्वितीये पादे तृतीये
पादे तृतीये रम्यत इति । स विरामः कथ भवति । आह प्राक्-
चतुर्थवर्णेषु स विरामो भवति द्वादशाक्षरे । अष्टाक्षरे वा ऽगि-
ति । एतच्च प्राक्चतुर्थवर्णेषु भवति पादस्यादेतयोः साम्नोः
योऽस्वसम्पादनार्थमिदमारभ्यते । अगोनवे तदेव योनौ स प-
श्च दैस्वादोरित्येति । अथवा प्राक्चतुर्णेश्चोमिति एवमन्तंसूत्रं ।
प्राक्चतुर्षु निधनेषु शयोः हरिः सुवः ज्योतिरिति । एतेषुप्रागो-
कारोभवति । विनीचः।एवं पाठः । वाचिमत्स्येऽग्नित्येतत्र नीचं
भवति *नीचःश्च तृतीयेऽनृपद्दर *अगोनानित्यधिकारः।वैवश्चाये
निवर्त्तं तृतीये पादे तृतीयमक्षरं नीचं भवति । पष्ठमपरं च पश्च-
दोते च नीचेभवतः । पष्ठमष्टमम इत्यर्थः । *एरूर्चेद्रे *एरूर्चे-
वैयश्चेपुनानायां तृतीये पादे यथाणामुद्दिष्टानां तृतीये पष्ठनम-
ष्टमानां पूर्वे नीचेभवतः । तृतीये पष्ठे इत्यर्थः । *दसंज्ञीयेहाराद्यो-
निवत* वैच्छन्दसे यज्ञायज्ञीये आद्ययोः स्तोत्रहारात्परं यत्परं
तद्योनिवद्भवति । अष्टाक्षरं भवतीत्यर्थः । सिद्धारंभीविशोपाविनस-
या *अविशोत्तमायां सोमाद्ययोश्च* विशोत्तमाया यज्ञायज्ञीये
सोमःपवतेजनितामां ज्ञीये आद्ययोः स्तोत्रीययोः प्रतिहारात्पर-
स्य पर्वेयोनिवद्धावमतिपेदः *अग्नेये जास्वरं बृहन् बृहदा-
ग्नेये जास्वरस्य टाढिः सिद्धोपन्यायोऽशेपार्थः । *नानिउदःसु*

**यथोश्चाग्नेयेजास्वरंबृहद्वार्विछदःसु प्रहूयसाग्राश्चद्व्यक्षर-मघ्र द्वादिस्तनिपार्श्वयोर्यथर्चेःसर्वत्रा ऽस्तावहारयोरव-**

बृहदाग्नेये जास्वरस्य वृद्धिप्रतिषेधः । अग्निनरायां । आग्ने-यजास्वरस्य वृद्धिप्रतिषेधः *प्रहूयसायाश्चद्व्यक्षरमध्र *र-स्थिचेन बछंदसे बृहदाग्नेय प्राहुयसाआद्यं । द्व्यक्षरं अस्र्द्धं भवति अग्निनरायामेव । आदिस्तनिपार्श्वयोर्यथर्चः सर्वत्र* पादादि-संवानि गायत्रपार्श्वयोः सर्वत्र सर्वेषु यथर्चं भवति* अस्तावहार-योरवश्यपेहिस्तोमप्रसुमरामपरा जीचारे* अकारः प्रतिषेधार्थः । पदादेर्वक्ष्यमाणेषूदाहरणेषु यथर्चाभावः । उदाहरणानि । अव-श्येहि स्तोमं सुमाराः मामराराजी । एकाक्षराण्युदाहरणानि । यथा संक्षेपेन अकारादीन्युदाहरिष्यामः । अकारः अभिसोमायां प्रस्तावे संतनिति गायत्रपार्श्वयोः इयोन्द्रायहिताणां च संतानि नि अस्मात् प्रतिहारे विकारः । वयःहाउ श्वेतोहाउ । हिन्वेहाउस्तोतूहा-च । मन्स्याहाउप्रुत्वाहाउ । सन्तानिनिगायत्रपार्श्वे प्रस्तावे प्रास-रासः । राजादेवः । प्रतिहारे प्रहिन्वानः । प्रतिहारेएव । प्रयो-नामक्षरयेनपादमिति च । एतानि गायत्रपार्श्वे प्रतिहारे जीराः-संतनिति प्रतिहारे । *भेचकारातक्रांतमयोनी* शाक्वरर्षभे च अकारांतं यःप्रत्युत्क्रान्तं भवति । योनित्र । उदाहरणानि । पा१रयत्राए्धा२ वाए्धाएवाए्भा२ एवाए्मानाए्महाएत्वना २ । उदूहः सर्वत्र *व्यक्षतरसुच्चमुच्चयुडहइसनेन लक्षणेन । येषु सामसु उदाहःप्राप्नोति तेषु उदूहः सर्वत्र कार्य इति सिद्धोप-न्यासः विशेषविवक्षया *अपीडे* । पौरुमीढैस्त्वमेग्नादिषु उ-दूहा न भवति । च प्राक्तुणोऽश्वेतस्यिन्सूत्रे द्वितीयेपि वर्ण-नअनेनाभ्युपायेन स्तोभानुसंहारएवोपादिश्यते । प्राक्तुर्पु निध-नेषु अमितिस्तोभः निधने प्रत्ययभूते कर्तव्य इत्यर्थः *गते-

श्येहिस्तोमसुमराप्रमराजीचरे भेचाकारांतक्रांतमयेना बुदूह॑ः सर्वत्रा मींदे गतेश्च कनीयस्यत्वमोकारस्य कृ- तलेयेत्वं पदगीनिस्त्वासिद्धत्वात् ॥ ५ ॥

श्रुध्येस्तावेतुरीयेष्यतेसर्वत्र संवत्सायांतु तृतीये गोमन्नश्च मरुनामिन्द्राऽस्त्वासूसमायां धसेचतुर्थांर्थ्यो-

श्चकनीयश्च स्यत्वं* इंद्रायेन्द्राया क्रौंच उगतेः अत्वं भवति । किमविशेषेण । न । कनीयसि वर्णे मत्ययभूते । अकारस्य म-प- पभुत कथमोकारस्य कनीयस्त्वमिति । उच्यते । संध्याग्रश्च स्वि- र्णारिंत्रकालोभवतीतिवचनात् *ओकारस्यकृतलेयेत्वं* ओ- कारस्य हारिकृताकालयेययोः अत्वं भवति । एवं सुष्वाणो- हाविष्कृत । तुभ्येत्मोविमासोकालेये *पदगीतस्त्वासिद्धत्वात्* तुशब्दः पक्षव्यावृत्तये । यदुक्त कृतलेयेअत्वमिति, तव कस्मात् । असिद्धत्वात् । किमुक्तंभवति । उच्यते । अत्वमध्येऽ- ग्रहणादित्यर्थः । तस्मात्पदगीतमेव नात्वमिति ।

इति-अजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य पञ्चमी कण्डिका ॥

*श्रुध्येस्तावे तुरीये ष्यते सर्वत्र* श्रुध्येप्रस्तावे चतुर्थमक्षरं कृष्यते सर्वत्र सर्वेषु *संवत्सायान्तु तृतीये* संवत्सायान्तु श्रुध्ये- तृतीये अक्षरे कर्षण भवति प्रस्ताव एव *गोमन्नश्च* गोमनाया च श्रुध्ये प्रस्तावे तृतीयमक्षर कृष्यते । उत्सर्गाच्चतुर्थस्य कर्षः प्राप्तः । एतयोः सूत्रयोरपवादः *मरुनामिन्द्राऽं स्त्वासूत्तमाया* महतां योनौ स्त्वासूत्तमाया प्रस्तावे इंद्रामाग्रते । इंद्रायसोमसुपु- तः परिस्रवद्वितीयेइंद्रासाउत्तमायामापद्यते । मध्यमायामप्यविशि- ष्टोतिचेत् । न । मध्यमाया चतुर्थे स्वरएकमक्षरंतिष्ठन् इत्येप विशेषः *धसेचतुर्थार्थ्योनित्य* नौधसे चतुर्थाचस्य आद्यमक्षरं

निवृत्तप्रथमायां प्रस्तावे द्वितीयं घातं रूणसाम्न्याद्य-
न्त्ययोस्तु विकारो नामैधेधात्स्याद्ययोः पादुपामापद्य-
ते थमोच्चप्रभद्रविम जनेचमु लंवि र्स्मितिसचवरपृ-

---

योनिवृत्तवति । तावेदस्मनृणीषा ३ हां ३ एतच्चतुर्थोद्य तदेतत्सूत्रं समानमिव सर्वत्राव्यभिचारात् । अथवा थसेचतुर्थोद्योनिवत् । चतुर्थोद्यादन्यद्यथर्चं भवति । प्रथमोच्चे आद्यमक्षरं सर्वत्र यथर्चं भवतीत्यर्थः । चात्स्वात्स्वसरा३ एतत् प्रथमोच्च । एवमल्पसारमेव व्यभिचारात् *प्रथमायां प्रस्तावे द्वितीयं घातं रूणसाम्नि *ज्योतिर्वरुणसाम्नि च प्रथमायां प्रस्तावे द्वितीयमक्षरं निहन्यते । मंद्रं भवतीत्यर्थः । अभिक्रन्दंचित्यर्थं *आद्यान्त्ययोरस्तु विकारः* ज्योतिर्वरुणसाम्नि च आद्यान्त्ययोः स्तोत्रीययोः प्रस्तावएव विकारो-भवति । एतयोश्चतुर्थस्वरे बहून्यक्षराणि भवन्ति इत्ययं विशेषः *नामैधेधाद्याद्ययोः पादुपामापद्यते* अथाहिंनामैधे आद्ययोः स्तोत्रीययोः पादो३ऽनाद्द्वितीयायाः प्रथायाहि । अथाद्याद्ययोः उपामापद्यते । उपास्त्याख्या उभे अप्येते पर्वणी सूत्रसिद्धे नाऽप्रामन्यत्र मव्यवहारोऽस्ति *थमोच्चप्रभद्रविम* वैराजर्षभे प्रथमोच्चमिति प्रथमे स्वरे उच्चत्वस्यापेक्षितत्वात् । अभिस्वारमपेक्ष्य मंद्र उच्चः । मंद्रमपेक्ष्य चतुर्थ उच्चः । चतुर्थमपेक्ष्य तृतीय उच्चः तृतीयमपेक्ष्य द्वितीय उच्चः । इत्यतो विशेषणमुपपन्नं प्रथमे स्वरे उच्चं नान्यस्मिन्निति । एकाक्षराण्युदाहरणानि त्विम म । इंद्रमच्छसुता । शिपिविष्टस्य । मघवन्नुज्योक् च इति *जनेचमु* राजने च प्रथमे स्वरे उच्चं भवति । भुवन्दमुवनेपुज्येष्ठम् *लंविरिमस्तिसचवरपृष्णस्यैतमद्रेषु* एकाक्षराण्युदाहरणानि यथासंख्येन लवनु साम्नि । रयि पिशङ्गं बहुलं वि: पृश्निनि । सोमाय-

ष्विणश्यैतमद्रेषु ष्टंभेषौशमूये श्यैयेचनाकृद्द२हृ यशसि-कृष्टादेकं ध्यमायामकारोद्वितीये२ संमिश्लःसुरूपे प-दगीतऽष्ठ्ये हकारे च ककारश्चोभवतिमरायेद्विमात्रः-

---

उत मथंदधिः । इमिन्द्रश्यैते । शिक्षाणोऽस्मिन् । सि । पौरुमद्रे । अयोवसानोऽर्षसि । अन्यत्रैतेषु सामसु एषां पर्वणां योनिवद्भा-वादेतमक्षरं नीचं भवतीति *ष्टम्भेषौशमूये* महावैष्टंभेच ऽश मूये । एकाक्षराण्युदाहरणानि । योनिवद्भावाञ्चीचत्वे प्राप्त उच्चीभावोपदेशः । कदामुत तृषाणऽ । स्वयावपंभवतः शन-स्त्वावोऽजन्त्सहस्तऽंस्त समुद्रस्याधिविष्टपे *श्यैयेचनाकृदुंहत्* सदोविशीये च प्रथमे स्वरे उच्चंभवति अधिकारात् । एकाक्ष-राण्युदाहरणानि । नाकृदहव । इमे चविश्वाभुवना । यथमध्ये पृथ्वेन । वैचृद्दमत्याव । अभिसत्यईशानकृव । एवमन्तेमध्यमई । राजादेवकृतं बृहव *यशसिकृष्टादेकं* इन्द्रस्य यशसि कृष्टादेक-मक्षरं द्वितीयस्वरं उच्चं भवति । आद्यन्तयोस्त्वं मूत्राणि हऊंशब्दात् कृष्टाव,हऊंशब्दोतीये स्वरेउच्चोभवति । महीनकृतिशब्दात्कृष्टत्वश-ब्दः द्वितीय उच्चोभवति । सिद्धोपन्यासोविशेषार्थः *ध्यमायामका-रोद्वितीय* मध्यमाया तु स्तोत्रीयाया कृष्टात्परः द्वितीयं स्वर मकारश्च भवति । तजम्बनूनमद्वितीयं द्वे अक्षरे भवत इत्यर्थः *संमिश्लः सुरूपे पदगीतऽध्यो *संमिश्लः सुरूपेपदगीतोभवति । ऽष्ठ्ये प्रत्ययभूते आद्ये तु सुरूपे अनोद्येप्रत्ययत्वात् संध्यगीत एव *हकारेच ककारश्चोभवति मराये द्विमात्रः *मरायेचककार ऽभवति । हकारे प्रत्यये द्विमात्रः । ननु ह्रस्वः कोउहादाउहाउ-हाउवेति *गोष्ठ्युः *गोष्ठेषु परीतोत्पाचिषुअः कारऽभवति । किमुक्त भवति यस्यामृचि गोष्ठउत्पन्नस्तस्यामृचि अकारऽभवति

छेदवःकारः तराग्रेषुप्यते नौवरुणसाम्नि द्वितीयेर्ला-
देधर्मोद्यमऊभति चतुर्थेतुतूर्णीजास्वरं सर्वत्र कांपाच-

---

गोष्ठानीति बहुवचनं छांत्रेण्पायेनवाआर्षेयांतरवोद्धारशालावत् तथा
च सामगेनेऽडपिभाव्यं गोष्ठेषु भवेत मार्नविधिरिति । तस्मात्प-
रीतेःपिचतासुनयिति -भास्ते अःकारः सर्वसामसु ऽभवति । तोपि
इदश्चरूपग्रहणम् । परीतोपिंचतागापेतदुक्तं भवति, ऽभावश्चा-
प्य.धिकारात् *ताराग्रेषुप्यते* अमन्यद्भिदं । एकाक्षराण्युदाहर-
णानि । तशब्दः आतंरितंविभावरः । राशब्दः । राजने । येशब्दः
उच्चये । एतेषुतरोतरः । राजन उच्चयेषु अःकारोलुप्यते कथंतरो-
तर इत्यत्र रहतिप्राप्नोति । ऊष्मा चपरसंस्थानमापद्यते ।
इतिलक्षणात्तस्य अकारस्य लोपोभवति । ततोवचनांतरेणऽत्वं
भवति । अदेस्स । तथाराजनेवागीडामूर्वोवहन्दाइति अकारएव
प्राप्नोति । प्रकृतस्वात् । आग्राप्योभावोवाचानिकः । राजने च स्व-
भावऽभवतीति । उच्चये अहोराजण्यारिग्राणीतिप्राप्नोति रेफश्च-
तुरुपस्थाने लुप्यते । अप्राप्तिवाचानिकएवऽभावः उच्चयेसमास-
स्वादेति । एवमेतेषूदाहरणेषु अकारोलक्षणप्राप्तोलुप्तइति ।
अथवा.अपरा व्याख्या योगतराणिएषएतेषु भावः प्राप्तइति
वर्णयितव्यं *नौवरुणसाम्नि* योनौ च वारुणसाम्नि
अःकार ऽभवति । अधिकारात् । प्रमिश्रायोवधआ *द्वितीये
लांदेयमोत्वंमसतित* इलादेद्वितीये तु माने मधमे स्वरे
उर्ध्वं भवति । एकाक्षराण्युदाहरणानि । ऊति अंकारः । अंग्र-
तव । ऊकारः । ऊर्जनपा । तकारः तिर्मदस्य *चतुर्थेतु
तूर्णीजास्वरं सर्वत्र* तस्मिन्नेव इलादे चतुर्थे अनुगाने तूर्णी-
जास्वरमापद्यते । पावकवर्णाः शुकवर्णाइति । एवमादीन्युदा-

ष्यनेनयताचिन्निरेच देदेचाविधाः सर्वत्रा योनौ जास्व-
र८श्रमनसेचद्विपश्चमनमेचद्विप ॥ ६ ॥

अप्सुपडलेरक्षाष्कारणिधनवदुपान्त्ये भिरायवा

---

हरणानि । योनौ इन्द्रनरायाहणीइहजास्वरवापश्ने *कापा-
लुप्यते* तस्मिन्नेव चतुर्थेऽनु गाने योनिवदृष्टा कापा लुप्यते ।
पाँचकवर्चादीन्येवोदाहरणानि *नयतानिनिरेच* नकारः
प्रतिषेधार्थः । वक्ष्यमाणेषूदाहरणेषु कापा नलुप्यते इत्यर्थः ।
एकाक्षराणिचोदाहरणानि । यातानिम्रिरे । यकारः ईयासी-
भानुना । ताशब्दः आतावोनमही । निकारः पादाईश्चादर्शनां ।
मिकारः । आमीपमृन्नापदारे । शब्दः धाइरेपुरोजनाः *देदेचा-
विधाः सर्वत्र* तस्मिन्नेव छान्दे पदे पचाक्षराविधा
सर्वत्र भवति । अयेतवश्रएत्रमादीनि । तथा च बृहद्भानोशएत्रमा-
दीनि *अयोनौ* । योनिवर्जमित्यर्थः । योनौतुपादिका प■
विधाभवति । अन्यानुगानवर्जेव अग्निरग्निपात्वभिः इन्द्रनर इति
च एतेष्वनुगानेषु पादिकाविधाः *जास्वर८श्रमनमेचद्विप *
वैश्वमनसे च पत्रस्यादेतायायोनिदृष्टोयोस्वरः द्विपः स्वरोभवति ।
अतिद्विपः । सुनीथोघासमर्त्यइत्यत्र अतिद्विपः ।

इति उपाध्यायाजातशत्रुकृते पुष्पभाष्ये दशमस्य षष्ठीकण्डिका ॥

*अप्सुपडानेरक्षाष्कारणिधनवत्* त्रिष्टुप्सु वषट्कार-
णिधने विधुदद्राया रक्षाआप्कारणिधनवद्भवति बहूनां मनेबहूना
*उपान्त्येभिरायवा*प्रतिस्तोत्रीयं उपान्त्ये पादे अभ्यासवि-
षयेभिरायवा भवति।इतरेषु पादेषु व्यभिचारदर्शनात्सिद्धोपन्या-
सः । इतरथा योनिवद्भावात्सर्वेपादभिरायवामाप्नोति *अन्यत्र
सुतायल्लसा*अन्येषु पादेषु सुता भवति । आयेलुमासुता ।

ऽन्यप्रस्तुताद्यलुप्ता पञ्चाक्षरश्चाभ्यासः कार्या राजेऽध्यमा-
यांपाष्टे वृ दाद्यायांचान्त्यस्यन्तमसेस्वासूत्तरयोर्ढ्णीत-
रुतेचतुरक्षरे नाभ्यासे नरायेहा उवाद्वितीयात्सकृ-
त्कृष्टा दांत्याविधाः सर्वत्रस्वासूत्तमायां प्रथमेदे मूर्द्ध-

---

कदाचसोद्वितीये। दीर्घा ३ अहो वाप्लुता। एषाप्लुता अक्षरा आद्यलुप्ता भवति *पंचाक्षरश्चाभ्यासः* अर्धात्तृतीये। तृतीये पादे पंचाक्षरअभ्यासोभवति *कार्याराजेध्यमायां* अकार्या सामराजे मध्यमाया स्तोत्रीयायां पंचमाष्टमे अष्टमे पादे पादे वृद्धे भवतः। योनौसप्तमाष्टमयोर्वृद्धिरित्यतोवचनम् मतेधाराइसत्रा। *आद्याया चान्त्यस्य *आन्याया स्तोत्रीयायां अन्त्यस्य पादस्य पंचमाष्टमे वृद्धे भवतः* तमसेस्वासूत्तरयोर्ढ्णीतरुतंचतुरक्षरे*महो दैर्घतमसे पियासोमाया उत्तरयोः स्तोत्रीययोः ढ्णा च तरुणा ढ्णीतरुते चतुरक्षरेभवतः। सत्वामिन्द्रा ३ प्रभूवसाउ। इमाब्रह्मासम्मसदाई। एवंचतुरक्षरेकर्त्तव्ये। आद्यायामप्येवमिति चेत्। न। योनेच विचार्यत्वात्।.योन्यन्नरापेक्षं चेतद्वचनं स्यात्। अथवा ऊहकारेण सह विकल्पः *नाभ्यासे *उत्तरयोरेव स्तोत्रीययोः अभ्यासविषये अक्षरैव ऽक्षरैव तरुणाभवति न चतुरक्षरा *नरायेहाउवाद्वितीयात्सकृत्कृष्टा* नराये हाउवासामान्ते द्वितीयात्स्वरादारभ्य सकृत्कृष्टा भवति उपापत्वाद्स्याः उदूहप्रतिषेधः माशुपायादितिमासे वचनं *दात्या विधाः सर्वत्रस्वासूत्तमाया प्रथमे दे* पुनरुक्तमिदंसूत्रं *मूर्द्धन्यएव दंत्यः स्वरोपधः*दंत्यः त्रिरामेपि, मूर्द्धन्य एव भवति। किमविशेषेण। न। यदि शब्दे भवति स्वरपूर्व इत्यर्थः। कस्मिन्प्रास इदमारभ्यते। उच्यते। एकपदे रेफाद्यंकारोमूर्द्धन्य मापद्यते इति।

पदव त्परिष्कृतेचागमोलोप्यः ॥७॥

काणश्रवसोत्तरयोर्व्ये स्वदयसदादृधं दस्म्(सुरा-
क्रौंचेस्त्र मानहिवा मग्निवोवाजीयउपांत्यकृष्ट् सर्वासु·
अलंकृत भूषित दर्शनात्। मकृत्येव नाम सुशोभन तदनुसंहन्स्तो-
भं वर्णवत् तथा च परिष्कृतः। संस्तुत इत्यर्थः। किमुक्तं
भवति। स्तोभः परिष्करण अलंकार इत्यर्थः। तस्मिन्परिष्कर-
णे परिष्कृतस्तोभे आगमः आगमिकः सकार स, लोप्यः।
यथाहारिश्चंद्रस्यत्र वाभ्रवेनमामः। ऋतुवंद्रइति अस्य सकारस्य
स्तोभेसतिलोपो भवति। हाराइहाइवान्द्रो इति।

इति उपाध्यायाजातशत्रुकृतेपुष्पभाष्ये दशमप्रपाठकस्य
सप्तमी कंडिका।

*काणश्रवसोत्तरयोर्व्ये *स्वदयासदाहृधाम् *काणश्रवसे
उत्तरयोः स्तोत्रीययोर्व्येस्वदयायोनिहता सदाहृद्धामापद्यते
*दस्मं(सुराःक्रौंचस्त्रमानेहिवा* दस्मंनवोदस्मासुराअभिमव-
स्सुरा एतयोस्तृतयोर्वाहूनिधने क्रौंचिमभाइन्द्रोमहस्त्रभर्णस इत्ये-
तस्मिन्पादे मर्मामापनयोस्तृतीये पादे नहिवावापद्यते। नहिवान-
हिवश्रवश्वने द्वितीये मान्निपचवे पाद *अग्निरोवाजीयउपान्त्य-
कृष्टं सर्वासु* अग्निरोदेवमांशोभिरित्यत्र रायोराजीये प्रतिस्तो-
त्रीयं द्वितीये पादे उपान्त्यमक्षरं कृष्यते योनौ तु स्वादोरित्यायां
द्वितीये पादे उपान्त्यमक्षरं न कृष्यते। अग्नोवचनगौरीयाइति।
*त्रिकवत्मायाचाद्ययोः* त्रिकवत्मायां चाद्ययोः स्तोत्रीययोः
द्वितीये पादे उपान्त्यमक्षरं न कृष्यते। अत्र च द्वितीये पादे यत्पूर्वं
तदौपान्त्यमक्षरं कृष्यते। एवं द्रष्टव्यं। इतरथा नात्र पादः परि-
समाप्यत इति संदेहः स्यात् *प्रथमायां चतुर्थ्युत्तरयोः पंचम*
निदयवत्मायामेव योनौ आधाटस्वरात्परस्तात् प्रास्मात्परस्ताय-

त्रिकधत्साग्रांचाद्ययोः प्रथमायांचतुर्थमुत्तरयोः पञ्चम-
१५स्वासु वैराजे तृतीये प्रथमांत्स्येवृद्धेऽप्रसे नार्मेद्वितीया-
याः राधायांतृतीयमयोनौ कौत्सद२२प्रोत्तराकूपार२३श्रु-

त्पर्वं तत्र चतुर्थमक्षरं कृष्यते । तत्र त्रिकवत्सायामाद्याया स्तोत्रीयाया आस्वरात्परस्तात् ताराद्वाध्य एतस्मात्परस्तात् अन्यत्र आद्याएनयोः परस्तात्पर्वं तत्र पंचममक्षरं कृष्यते *स्वासु वैराजे तृतीये प्रथमान्त्ये वृद्धे* महावैराजे स्वासु सर्वासु स्तोत्रीयासु (तृतीये पादे द्वितीये पर्वणि प्रथमान्त्ये अक्षरे वृद्धे भवतः । द्वितीयेऽपि पादेष्वेवमेवेति चेत् । न । तत्राऽप्यभिचारात् अदोषः *अप्रम *अकारः प्रतिषेधार्थः ।)(१) तृतीयेपादे द्वितीये पर्वणि प्रथमान्त्ये अक्षरे वर्द्धते इत्यस्यापवादः प्रशब्दसशब्दौ न वर्द्धेते इति । सत्रामिद्रमइमाग्रहा *नार्मे द्वितीयाद२१राधायां तृतीयमयोनौ* नार्म्मेधे द्विवसोराधे ऊर्जापाताचताचतासभाइति च । अत्र द्वितीयाया वसोराधाया ऊहगीतौ तृतीय मक्षरं वर्द्धते द्विनोदाइवा । वाहासुवा । इद्र विश्वाया च योनिवर्ज । योनौ तु द्वितीयाया वसोराधायां तृतीयस्याक्षरस्य वृद्धिप्रतिषेधः *कौत्सद२२प्रोत्तराकूपार२३श्रुध्यपृशिनमानवाग्रकणवेधृतवामिष्टातिथक्रुधानि त्रपु च नौ *असंबद्धमायमिदं सूत्रं छागभोजनन्यायेन कस्मिश्चित्किंचिद्वर्द्धते । ऐडकौत्से याहींद्रेभिप्रस्ताराद्यस्य योनावेव अकारस्य वृद्धिः । परिसंख्यानार्थं वचनं अभीनोत्रादिषु प्रस्तात्रादिषु प्रस्तावाद्यस्य वृद्धिप्रतिषेधः । उत्तरे आष्टा२५दष्ट्रे तृतीये पादे द्वितीयमक्षर योनावेव वर्द्धते ।

(१) ( ) एतद्दन्तर्गतो पाठ पुस्तकद्वये नास्ति, तथापि एकस्मिन् वर्तते इति स्थापितः ।

ध्यपृश्निमानवावारुणवैधृतवासिष्ठतिथकुम्भानित्रेपुचनौ नीपंगशाकरयोराधांतोऽयोनौ ग्निस्त्रीयारे रिंतुरपि शोके मनगोभिस्त्रिणिधने सौहविपरंग्रोत्तरयोर्गो भिरिलान्दस्वान्त्याद्यमुपान्त्यमयोनौ ॥ ८ ॥

---

तथा उत्तरे दङ्ष्ट्रे एतदुक्तं भवति । आकूपारे यदिंद्रचित्रायां द्वितीयेपादे द्वितीये पर्वणि दृशावसायाएं तृतीयमक्षरं योनावेव वर्द्धते । श्रुध्येय तिहारद्वितीयस्य योनावेव वृद्धिः । वरुणसाम्नि घृतवत्या द्वितीयेपाद अष्टममक्षरं(कृष्यते)वर्द्धते । वैधृते च वामिष्ठ एपमाकोशायां मध्यम योः पादयोः द्वितीयमक्षरं योनावेव वर्द्धते । आभिमिगाण्यां प्रतिषे-धः सर्वेषामेतपामूहगीतो प्रतिषेधः तिथकुम्भानित्रेपु च एतेषु अत्येव-मेव परिसंख्यानार्थं वचनं । दैवातिथे आद्यायामेव स्तोत्रीयायां तृतीयपादाद्यमक्षरं वर्द्धते वैककुभे च उद्गीथाद्यस्य योनावेव वृद्धिः । पूर्वे च जनित्रे पानिहारायस्य योनावेव वृद्धिः *नीपं-शाकरयोराधान्तः* अनीपङ्के रहस्ये च शाकरवर्णे आद्यन्तो-वर्द्धते यदिन्द्रचित्रअर्वातोमवृचयोः *अयोनौ* योनावेव त-योराद्यान्तयोः वृद्धिप्रतिषेधः । उग्रं अतीपन्द्रेसानुः शाकरपर्णे । *ग्निस्त्रीयारे* शुद्राशवन्तीये द्वितीये पादे द्वितीये पर्वणि द्विती-यस्याक्षरस्य एतयोरेव वृद्धिरन्यत्र प्रतिषेधः परिसंख्यानेन पदं द-ध्यात् । अग्निष्टुन्मवाजस्वीरान । *रिंतुरपि शोके* अशोके च रितुः । आरि च एतेषामक्षराणा वृद्धिः मजूह मधुरा इन्द्रअजनूराः । अयेरूर्णे *मनगोभिस्त्रिणिधने* भानेस्त्रिणि धने अग्नोगोपान्तोभि-रितिभिशब्दस्य वृद्धिः *सौहविपरंग्रोत्तरयोर्गोभिः* *सौहविषे उत्तरे च उक्ष्णारन्ध्रे गोभिःशब्दस्य वृद्धिः । गोभिः श्रीणान इति । सौहविषे गोभिः जात इत्यादि पौरुग्रे *इलान्दस्वान्त्या-

वैश्वमनसेत्वा स्तोभार्चिकसंधेर्ग्रहणात्संश्लेषो द्वितीयान्तेयो-त्तमायामाद्ये शौक्तेचाद्ययोः शौक्तेच सुपर्णश्रीणमग्रहं रु-णसाम्नि इलान्देहीषीप्रभृत्युद्दारोऽन्त्यायामनुद्दार स्तम-सोऽर्कयोनाद्ययोर्मार्गायतोद्घातनिघातौ ॥ ९ ॥

---

जे योनावन्त्ययोर्नतं* महावैराजे योनौ आद्यायामन्त्ययोः पा-दयोर्विनतं भवति । अन्यत्र प्रतिषेधो न भवतीत्यर्थः । *वैश्वम-नसे त्वास्तोभार्चिकसन्धेर्ग्रहणात्* वैश्वमनसे संश्लेषो भवति । जस आकलशीमित्यत्र । कस्मात् । अस्त्वात् । अस्त्वोपदेशादि-त्यर्थः । जमावैश्वमनसा इति । यदि पुनरत्र चौपसन्धिन्यायेन सं-श्लेषः क्रियते तथासति अस्त्वोपदेशोऽनर्थकः स्यात् । किञ्च स्तो-भार्चिकसन्धेर्ग्रहणादेव संश्लेषो भवति । नान्यथा । कथमयं स्तोभार्चिकसन्धिरिति । उच्यते । यो सौ आकारः अस्त्वपादितः स्तोभः स इत्यभिप्रायः *संश्लेषो द्वितीयान्तेयोत्तमायामाद्ये* वारस-मे द्वितीयान्त्ये पादे नीचादी भवतः । प्रथमायास्तोत्रीयाया उत्तमा-यामाद्ये वारसमे अन्त्यायां स्तोत्रीयायां प्रथमद्वितीये पादे नीचादी भवतः *शौक्ते चाद्ययोः* शैशोके चाद्ययोः स्तोत्रीययोर्यथा-सम्भवं पादादयो नीचा भवन्ति *शौक्ते च* शौक्ते चाद्ययोः स्तोत्रीययोः पादादि नीचैः । *सुपर्णश्रीणमग्रहंरुणसाम्नि *वरु-णसाम्नि एते शब्दाः प्रतिहारविषये नीचा भवन्ति *इलान्दे इडी-षीप्रभृत्युद्दारः *इलान्दे तृतीये तु गाने बृहद्भानोश इत्येतस्मिन् हीषीप्रभृत्युद्दारः भूत्वा एषा हीषी एतस्याः परस्तात्सर्वे स्तोभाउ-दुच्चियन्त इत्यर्थः । *अन्त्यायामनुद्दारः* एतस्मिन्नेवानुगाने अ-न्त्यायां विधामा दाशुषे कात्रे इत्येतस्यामनुद्दारः *तमसोऽर्के योनाद्ययोर्मार्गायतोद्घातनिघातौ *महादैर्घ्यतमसे योनावाद्यामृ-

अथोहगीतीनां प्रस्तावोद्देशः स्तोभः पुरस्तादुत

---

स्यर्थः । अन्त्ययोः स्वस्तोभीययोः भागावेता उद्घातनिघातौ प्रतिभवतः । वाक्यशेषः । कस्माद्भेदेनोपन्यास योनावन्त्ययोश्चेति । उच्यते । धर्मभेदात् । आद्यायामुद्घात भागावेता उत्तरयो निघात प्रतीसतोभेदेनोपन्यासः उद्घात इत्युच्चप्रतीत्यर्थः । निघात इति नीचप्रतीत्यर्थः । आद्याया सोमिन्द्रप्रगाथाब्द उच्चप्रत्ययः प्रत्ययाभादापूजशः शब्दोनीचेर्वर्तते । स्वमेवघान् छन्दोनीचप्रत्ययः पर्वणा भेद कृत्वाआत्मनोनुस्मरणार्थं केनापि कृतम् ।

इति उपाध्यायाजातशत्रुकृते पुष्पभाष्ये दशमस्य

नवमी कण्डिका ।

*अथोहगीतानां प्रस्तावोद्देश * कोऽस्याभिसम्बन्धः । उच्यते भावाः परिसमाप्ताः । तेषां च भावानां भक्तिसम्बन्धेन लक्षणमुक्तं । स्तावोपान्त्य दैव्ये येसूक्ते तरेहागादि उपायाद्वितीय काण्डे योनौ निधने हीषीस्यप्रसर्वत्रेति । अतः तासां भक्तीनां विज्ञानार्थमाह । अथोहगीतीनामिति । यद्येव सर्वभक्तीनामेव लक्षणोद्देशोवक्तव्यः । कुतः । यस्मात्सर्वभक्तिसम्बन्धेन भावानामुपदेशः कृतः । अथ कस्मात्प्रस्तावस्यैव केवलस्य लक्षणमुद्दिश्यत इति । उच्यते । एवमेतत् । किन्तर्हि ? सूत्रकारेण पञ्चविधग्रन्थकारादिभिः प्रतिहारनिधनयोर्लक्षण मुक्त्वा तत अथातः प्रतिहार-सूत्र महाप्रपञ्चेन प्रतिसामानुक्रमण कृत । प्रस्तावलक्षण नैवोक्त ।

सूत्रे पाञ्चविध्ये च लक्षणमात्र उपदिष्ट । ननु प्रतिहारवद्विस्पष्टमुक्त । अतोविस्पष्टीकरणार्थं आद्यत्वान्मुख्यत्वाच्च प्रस्तावस्य विशेषलक्षणमाह । उद्गीथोपद्रवौ तु परिशेषासिद्धौ

र्वा (क) प्रस्तोतुरंतेवा विधाय्य उद्गातुस्तकारावर्भ-
पावमानजानित्राणाम् हुवादिर्वासिद्धे पक्षोनादेशं द्यु-

तस्यादाह । अथोहगीतीनां प्रस्तावोद्देश इति । अथ भावानन्तर्यमूहगीतीनां साम्नां प्रस्तावोद्देशः । उद्देशो लक्षणमुच्यते । प्रस्तावस्य लक्षणं वक्ष्याम इत्यर्थः । तदेतत्प्रतिज्ञासूत्रम् । *स्तोभः पुरस्तादन्तर्वा प्रस्तोतुः* *यस्य प्रस्तावस्य पुरस्ताद्यः स्तोभः स प्रस्तावाङ्गं भवतीत्यर्थः *अन्तर्वा* अन्तरशब्दोऽपि मध्यवाची मध्ये च प्रस्तावस्य यः स्तोभः स प्रस्तावाङ्गं भवति यथा पुरस्तात् स्तोभः आश्वसूक्त पूर्वप्रोक्ताश्वहयावस्याभिनिधनकाण्वादारसदिडासंक्षारादिषु । मध्ये च यथा गौषूक्तसौवे माधुच्छन्दसवाचः सामानीयादौ यद्वाविष्कुवादिषु क्वचिदुभयं यथाभवि *अन्ते च *प्रस्तावस्य यः स्तोभः प्रस्तावाङ्गं भवति । यथा पौरुमद्गमौद्धि रद्रुमनवैतद्विधनिधनायास्यादिषु *अविधायः* किं सर्व एव प्रस्तावान्त्यः स्तोभः प्रस्तावाङ्गं भवति । न । अविधायः । अकारः प्रतिषेधार्थः । विधायस्तु उद्गीथाङ्गमेव भवति । किमुक्तं भवति । प्रस्तावात्परा या विधा तस्या आदौ यः स्तोभोऽवस्थितः तस्य अङ्गभूतः स न प्रस्तावाङ्गं भवति । किं तर्हि । तद्विधाङ्गमेव भवति उद्गीथाङ्गमित्यर्थः । यथा आथर्वणवापाहरऐडस्वरपश्वानिधनवैरूपऐडसाकमश्वादिषु संक्रुतिनि च प्रस्तावपक्षे । उद्गातुस्तु कार्वर्भपावमानजानित्राणां* तुशब्दः पूर्वलक्षणप्राप्तनिवर्तकः एतेषु सामसु पूर्वलक्षणेन अविधायत्वात्प्रस्तावाङ्गत्वे प्राप्त उद्गीथाङ्गं भवतीत्यर्थः । *हुवादिर्वासिद्धे *सिद्धावे पूर्वलक्षणेन कृत्स्नस्तोभस्य प्रस्तावाद् द्विन्वे प्राप्ते एकदेशस्य उद्गीथाङ्गत्वमुपदिश्यते । हुवादिस्तोभः उद्गातुर्भवति । यथायैतेषामिष्टहूवेहोईपन्नमुद्गातुर्भवति *पक्षोनादेशे* पर्वत्र पर्वसामसु पक्षः प्रस्तावोभवति ।

क्षरोवासंकृतिदार्ढच्युतयोश्चतुरक्षरोवासुरूपाजिगैड-साकमश्वानां सदेवतोवाराजनशाकरपर्भयो द्विपात्सं जयना नदगौशृंगरात्रिदेवोदासानां कावश्रीतकक्षा-र्पभत्यंतायास्यैडौक्ष्णोरंध्रैडसौपर्णमोत्क्षमार्गीयवज-

---

*अक्षरोवासंकृतिदार्ढच्युतयोः*पञ्चोवाचाशब्दात् । *चतुरक्षरोवा सुरूपाजिगैडसाकमश्वानां *एतेषां सुरूपादीनां चतुरक्षरोवा प्रस्तावोभवति । सुरूपैडसाकमश्वयोः । सस्तोभश्चविभागस्थान प्रस्तावाक्षंभवति । अन्तेचाविधाद्यइति वचनात् *सदेवतोवाराजनशाकरपर्भयोः* राजर्षनशाकरपर्भयोः सदेवतः पादः प्रस्तावोभवति । पादः साम एव सूत्रे । पद्यो नादेगच्छति विशेषेणार्थपरिसंख्यानभयादेवतार्थ आरम्भः । देवतासूत्रात्सोभवस्वाद्वचनारम्भः । अन्ये त्वधीयते—सदेवतोवाराजनशाकरपर्भयोरेतेषां विकल्पः सदेवतोवा देवता विनाच *द्विपात्संजयनानदगौशृङ्गरात्रिदेवोदासानां* एतेषां साम्नां द्वौद्वौ पादौ प्रस्तावोभवति *कावश्रीतकक्षार्पभत्यन्तायास्यैडक्ष्णोरंध्रैडसौपर्णमोक्षमार्गीयवजरावोधीयपद्माहिष्ठीयोत्सेभवाग्रस्वारमराजपौरुणीडपूर्वारवत्नौमतार्वतुरयरावैरूपद्वस्वांवृहदोपशामहादिवाकीर्त्यानां वाचः* एतेषां कावादीनां वाशब्दान्तः प्रस्तावोभवति स्तोभश्च यथान्याय भवति। अन्तेचाविधायइत्यनेनन्यायेन। यथा त्र्यन्तायास्यैडौक्ष्णोरन्ध्रैडादीनां सहस्तोभेन वा शब्दान्तः प्रस्तावोभवति । महावैष्टुभश्यैताद्विनिधनायास्यसौभरसत्रासाहीयश्रुध्यावरुणसाममदोविशीयाभविर्चनाश्चादीनां वान्ततस्वेप्यग्रहणं न्यायसिद्धत्वात् । पद्योऽनादेशइति अविधायइतिस्तोभस्य प्राप्तिरिति।अन्तग्रहण कावादीनां क्षिपा चित्पद्यानिरच्चप्रस्तावो भवति

रायोधीयघ्नाहिष्ठीयोत्सेधवाभ्रस्वारसामराजपौरुमी-
द्वपूर्ववारवंतीयत्वाभ्रंतुरयणवचैरूपह्रस्वावृहदोपशामहा-
दिवाकीर्त्यानां- वातः कृष्टाद्वृष्णो द्विर्वावारवंतीय-
आत्मनिचमहादिवाकीर्त्ये यांतोदाशस्यरथभासशांम
दगायस्पासितानां जारांतोर्वीकत्रासिष्टप्रियपत्राणां
वारांतोवैश्वामित्रे ह्याउकारांतः संतनिजमदग्न्याभीव-
र्तकार्तयशाकारांत स्वाष्ट्रीसाम्नां जाराग्निरूतोपक्रमा-

---

केषांचिद्र्वंद्वं प्रस्तावः । अतोवैलक्षण्यात्कात्वादीनां पृथग्ग्रहणमुक्तं
*कृष्टाद्वृष्णः* इद्धिकृष्टात्परोयोवा शब्दः तदन्तःप्रस्तावो भवति ।
वाशब्दादुत्वाव कृष्टात्परइति विशेषणार्थमाह । कृष्टाद्वृष्ण इति ।
इन्द्राउवापावमन्तः *द्विर्वावारवंतीये*पूर्वे वारवन्तीये द्वौ वाश-
ब्दौ तत्र आद्ये प्राप्ते विकल्पमाह । द्विर्वाशब्दान्तः प्रस्ताव इति
सकृद्वेति *आत्मनि च महादिवाकीर्त्ये* पूर्वसूत्रेणादावेवैको-
वान्तः प्रस्तावःप्राप्तः । अनेन सूत्रेणात्मनि च द्वितीयोविहितः ।
आदावात्मनि द्विर्वाशब्दान्तःप्रस्तावोभवति समुच्चयेन नतु विक-
ल्पः *यान्तोदाशस्य स्यभासशांमदगायस्पासितानां *एतेषां
चतुर्णां दाशस्यस्यादीनां याशब्दान्तः प्रस्तावोभवति । ऐडकौ-
त्सादीनां यान्तत्वेऽप्यग्रहणादुक्तः परिहारः । कावश्रौतकसार्पभेत्ये-
तस्मिन्सूत्रे *जारान्तोर्वीकवासिष्ठप्रियपत्राणां* एतेषां त्रयाणां
वोडूकादीनां जारान्तः प्रस्तावोभवति *वारान्तोवैश्वामित्रे*मरुपौ
ष्कलाकूपरादीनांवारान्तत्वेऽप्यग्रहणं अत्रापि स एव परिहारः ।
*हाउकारान्तः सन्तनिजमदग्न्यभीवर्तकार्तयशाकारान्तत्वाष्ट्रीसा-
म्नां *एतेषां चतुर्णां हाउकारान्तः प्रस्तावोभवति । पूर्विनदा-
वसुनिधनासितच्यावनहाविष्कृतपौरुमद्गगौतमादीनां हाउका-

णातएवाविभाग्यानाम् ॥ १० ॥

यौक्ताश्वैडयास्यत्रैशोककोशश्चौष्टोद्दंशपुत्रदैर्घतमसासिमानांनिषेधवैराजानां द्व्यक्षरो ऽभ्यस्तो द्व्यक्षरआ·

---

रान्तमध्यग्रहणं पूर्ववत् *जाराग्निदूतोपक्रमाणां तएवाविभाग्यानां* *जाराग्निदूतयाचयान्युपक्रमान्ते तानि जाराग्निदूतोपक्रमाणि । तेषां ते एव पर्वाणि प्रस्तावाभवन्ति । जारोपक्रमेषु जाराग्निदूतोपक्रमेष्वग्निदूता । यथाश्वैष्टुभौशनाद्यरैदन्वदीर्घगूहगायत्रपार्श्वशाकरपभाथर्वणवार्णरेवतीनित्यवत्साबाजीयरथन्तरण्येगेयद् । श्येनः पक्षीयस्य चोत्तरयोः एतेषु जाराप्रस्तावोभवति । सुज्ञानवाष्ट्रीसामाद्यपार्श्वपूर्व्यमाणवाग्नेत्रौणधनेपोदधीवाजदायपोक्षणोरंध्राघास्सदीक्षयन्तीत्वाष्ट्रीसामवारसवाभ्रवकाशीतभारद्वाजाच्छिद्रायिष्टगृह्भारद्वाजकाशपूर्ववैष्णवौपगवपूर्वत्रिपुरीवापोहरायस्वरद्वदवस्यानाथर्वणातीर्थगान्तारिक्षवाहांडराजोवैरूपवपाह्वितसामानि । एतेषु सामसु अग्निदूताप्रस्तावो भवति । किमविशेषेणैव जाराग्निदूतयोः प्रस्तावार्थमिति । अविभाग्यानां साम्नामेषधर्मोभवति । जाराग्निदूते प्रस्तावः । विभाग्यानान्तु अग्निदूतासहितजारासहितेजारासहितश्च यथएव प्रस्तावोभवति । यथामरापदीशार्गदीर्घतमसोर्कारिष्टभर्गमुहावैश्वामित्रादिषु ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये दशमस्य दशमीकण्डिका ।

*यौक्ताश्वैडयास्यत्रैशोककोशश्चौष्टोद्दंशपुत्रदैर्घतमसासिमानांनिषेधवैराजानाद्व्यक्षरः* एतेषां यौक्ताश्वादीनां दशानां द्व्यक्षरः प्रस्तावोभवति । अत्र साहोदैर्घग्रहणं जारोपक्रमके सिद्धेपि अद्वैरद्वश्चात् । क्व इयपेक्षितेषु प्रस्तावाद्व भवति यथान्याय *अ-

वाजजित्स्वाररोहितकूलीयासितयौक्तस्नुवानामष्टा-
वौरुक्षयजागतसोमसाम्नोरेकादशोत्तरेजनित्रेद्वादशह-
रिश्रीधने स्तोभउपायांतः पदनिधनेषु निधनं चतदं गं९
स्या द्विरेकरूपे त्रिर्वापदस्तोभेष्विलांदाश्चोत्रिरुक्तंयथो-

---

नां पंचानां षडक्षरः प्रस्तावोभवति *अष्टावौरुक्षयजागतसोमसा-
म्नोः* अष्टावौरुक्षयजागतसोमसाम्नोः*एकादशोत्तरेजनित्रे *उ-
त्तरे जनित्रे तंत्वोदस्यपुरोजित्योः एकादशाक्षरः प्रस्तावोभवति ।
*द्वादशहरिश्रीधने* हरिश्रीनिधनेद्वादशाक्षरः प्रस्तावोभवति-
*स्तोभउपायान्तः पदनिधनेषु*येषां पदानि धनानि स्तोभ
भक्तीः प्रतिपद्यन्ते तेषु पदनिधनेषु उपायान्तः प्रस्तावोभवति ।
स्तोभः प्राग्नुच उपायश्चान्त् स्तोभः पदपदनिधने एवंतदुक्तंभवति-
उदाहरणानि । यथा गोष्ठमतोदसौमित्रधर्म्मभ्राजश्रीत्येयशः सं-
सर्पभद्रश्रेयोस्वहृचैकवृषोचरगवांव्रतलांदाद्वितीयानुगानगनपदस्तो-
भादीनि एतेषु उपायान्तः प्रस्तावोभवति । *निधनं च तदंगं
स्यात्*.तस्मात्प्रस्तावादूर्द्धं यत्पदनिधनं तत्प्रस्तावांगं अत्रोच्यते
सर्वप्रयोज्यत्वान्निधनस्याङ्गत्वे किं प्रयोजनं । उच्यते । कुशा-
निधाने प्रयोजनं अङ्गत्वे । निधनांतेकुशानिधानं भवति । त-
दङ्गत्वे प्रयोजनं । अन्ये तु ब्रुवते । अस्यमते न निधनमपि स्तो-
भविभाग्येसुप्रस्तोर्नप्रयोज्यमेवेतिवचनात् निधनं च तदङ्गं स्या-
दिति । तस्मादेव विशेषः *द्विरेकरूपे *पूर्वसूत्रे सकृदुपाया-
न्तः पदप्रत्ययः प्राप्तः अत आह । द्विरेकरूपइति । द्विः
उपायान्तः स्तोभः एकरूपेप्रस्तावोभवति पदप्रत्ययोद्वित्ता-
प्रत्ययश्च । एकरूपप्रत्ययोतापयन्तः स्तोभः पादानांनिधनत्वा-
दिति । उपासोगायत्वं । *त्रिर्वापदस्तोभेषु* । इदापि पूर्व

गीतप्रास्ताविकमेवस्या श्यणवादीनामप्रस्ताव्याउत्तराः

---

थोपदिष्ट #महानाम्नीपुपदिष्टम्भवति । कथ चोपदिष्टमिति न-च्यते । द्विरद्वासु प्रस्तावः । शाक्वरमथमेष्वपि । पद्य एव प्रस्तावोभवति । पूर्ववत् । पशिक्षाशचीना पता ३६ । १३ दाविछव-त्रिभजमा ३६ । १३ सनः स्वरिर्पदतिहिपाः । णेतत्रयः शाक्वरमथमेषुपानादेश इति । अथाप्येतदेवलक्षणान्त्यस्यास्यांपुरीषपदेषुचजाराप्रस्तावोभवति । वचनात् । तार्ण्यग्रद्वीपक्रणाणामिति अभ्यासेषु । आपाहक्षी ३ भूरीसाला । पुरीषपदेषु आत इवा एपै वक्रब्दः पञ्चस्वपिपकैकोस्पनप्रस्तावोभवति । एत एवमहानाम्नीषपदिष्टं । वच्छरत्तपु गीतम्प्रास्ताविकमेचस्यात् #रैव्छन्दसेप सामछ प्रस्ताविर्याद्वाणापादेकदेशाभ्यास इति उच्यतेयोनौ ।.अपक्षरपादाभ्यासात् । षोदशाक्षरः प्रस्तावोभवति । द्राणाचुएकादशाक्षरपादोपातः । एकदेशाभ्यासः । तेवपोऽक्षाक्षरः प्रस्तावोभवति । अतः पञ्चाक्षराभ्यासः । यरावादीनापप्रस्ताव्यादुत्तरायण्यानापश्चानांन्मवस्यसन्तानिशाकरवर्णानांस्तोत्रीया अप्रस्ताव्येपासन्ततिनि प्रस्ताव्येपासन्ततिनः । #वाशहोविकल्पार्थः । यत्रादिषु आद्यावहुत्तरयोः प्रस्तावलोमं एवसन्तति न्यपिमात्र । तस्मिन्नविफलमाह । वाप्रस्ताव्येउत्तरेसंसन्ततिन । वा अप्रस्ताव्ये इति विकल्पः । उत्तरयोरितिसिद्ध ।

इतिपुष्पसूत्रभाष्ये कादृशीकण्डिका दशमः प्रपाठकः समाप्तः ।

उपाध्यायाजातशत्रुकृतो । पाठकघनेश्वरस्यश्वद्वायनायपास्ति कालिखिता । उपाध्यायनरहसिसुतजुकासोमनमिति । यथोक्तं मथालक्षणं भवति । कथ चोक्त । द्वितीयेचातुगानेस्तोमपि भाख. स्वारतः प्रस्तावोभवति. ५ तृतीयदेवनतदेवप्रस्तावोभवति ।

प्रस्ताव्येवासंतनिनः  प्रस्ताव्येवासंतनिनः ॥ ११ ॥

इति पुष्पसूत्रे दशमः प्रपाठकः(१) ॥
पुष्पसूत्रं समाप्तम् ।

---

गीतमितिनभपथावर्णगितव्य । क्वचिद्गीतशब्देनपर्वगृहीतव्य । एवमत्रालेपे । क्वचिद्गीतिशब्देनगानगृह्यते । किमुक्तम्भवति । प्रस्ताविकीर्षीतिः प्रस्तावपाङ्गनगृहीतव्यमित्यर्थः । यथाविरायमिदंव्यो । उभयोरुदाहरणानिवक्ष्यामः ।

इति पुष्पसूत्रभाष्यं समाप्तं ।

---

(१) अथ प्रथमादर्शपुस्तके लगकेन लिपिकाल एवं लिखित.। 'संवत् १६७२ समये माघ कृष्ण १ रवौ अद्येह वाराणस्यां ... अभ्यन्तरनागरज्ञातीय त्रिपाठी ... सुतत्रिपाठी ... सुत ... ठी गापानाथ सुतत्रिपाठी ... लिखित । त्रिपाठी ... विश्वनाथ ... । विश्वनाथपुत्र ... पठनार्थं । तद्वत्पाठकस्य शुभम्भूयात् ।